# भास्वती

## ( त्रैमासिकी )

सम्पादकः

**डॉ० अमरनाथपाण्डेयः**

संस्कृतविभागाध्यक्षः

काशीविद्यापीठम्, वाराणसी

वर्षः—प्रथमः ]  सितम्बर, १९७६  [ अङ्कः—तृतीयः

# अनुक्रमः



———

# बौद्धेषु चित्तस्वरूपम्

श्रीरामशङ्करत्रिपाठी

बौद्धाः खल्वनात्मवादिनः। कुशलाकुशलकर्मसंस्काराणां वाहकः, अपरापरजन्मनाम् उपादाता, बन्धमोक्षयोरधिष्ठाता, कर्ता, भोक्ता च कश्चिदात्मा तैर्नाभिमन्यते, यथा खल्वात्मवादिन आमनन्ति। एतेन चित्तस्य महत्त्वं स्वभावत एतेषां मते आयाति। चित्तमेव कर्म करोति, फलं भुङ्क्ते, अपरापरजन्मान्युपादत्ते, तदेव बन्धस्य मोक्षस्य चाधिष्ठानमिति। यथोक्तम्—

चित्तेन नीयते लोकश्चित्तेन परिकृष्यते।
एकधर्मस्य चित्तस्य सर्वे धर्मा वशानुगाः॥ (व्या० ९५।२२)

तथा—

मनोपुब्बङ्गमा धम्मा मनोसेट्ठा मनोमया। इत्यादि वचनानि।

एवमयं त्रैधातुकः संसारश्चित्तस्यैव विलासः। चित्तमेव कर्मक्लेशवशाद् पाञ्चगतिके संसारे संसरति। चित्तमेव च क्लेशावरणानि ज्ञेयावरणानि च प्रहाय सर्वज्ञत्वमश्नुते। चित्तेनैव पञ्चगतयो नव सत्त्वावासाः सप्त च विज्ञानस्थितयः सिध्यन्ति। चित्तवशादेव पञ्चानन्तर्याणि, एवंविधान्यन्यानि चाऽकुशलानि कर्माणि कृत्वा पुद्गलो नरकेषूपपद्य नारकीयं दुःखमनुभवति, तिरश्चीनोऽसुरः प्रेतश्च भूत्वा तत्तद्योनिजं दुःखमनुभवति। शीलानि पालयित्वा, पुण्यानि सम्पाद्य समाधिं चास्थाय मनुष्येषूपपद्य मानुष्यकं सुखम्, रूपारूपिदेवेषु चोत्पद्य दिव्यं ब्राह्मं सुखं चानुभवति। प्रज्ञां च भावयित्वा लौकिकीं लोकोत्तरां पृथग्जनगोत्रमभिभूय क्लेशान् निर्धूय सत्यानि च साक्षात्कृत्य आर्यो भवति पुद्गलः स्रोत आपन्नः, सकृदागामी, अनागामी, सर्वांश्च क्लेशान् उत्खात-

मूलान् विधाय श्रावकीयां बोधिमधिगत्य अर्हन् भवति लोकेऽनुत्तरः। बोधिचित्तमुत्पाद्य पुण्यसम्भारान् ज्ञानसम्भारांश्चार्जयन् श्रुत-चिन्ता-भावना-प्रज्ञाभिरुत्तरोत्तरां विशुद्धिमधिगच्छन्, सम्भार-प्रयोग-दर्शन-भावनाऽशैक्षमार्गादि-क्रमेण भूमेर्भूमिमधिरोहन् षट्पारमिताः प्रपूर्य तत्त्वं चतुष्कोटिविनिर्मुक्तं शून्यताख्यं साक्षात्कृत्य, सवासनक्लेशावरणानि सबीजानि ज्ञेयावरणानि च सम्यगुत्पाट्य महाबोधिमभिसम्बुद्धय सम्यग्सम्बुद्धो भवति तथागतः कायत्रयसम्पन्नः। एवं चित्तमेव समलं क्लेशकर्मणामाधिष्ठानं प्रज्ञोपायकौशलेन क्रमशो निर्मलीभवद् अवसाने ज्ञानधर्मकायरूपेण परिणतं भवति।

बौद्धेष्वन्यतमा विज्ञानवादिनस्तु चित्तातिरिक्तत्वेन केषांचिद् द्रव्याणामस्तित्व-मेव नाङ्गीकुर्वन्ति। "चित्तमात्रं भो जिनपुत्राः यदुत त्रैधातुकमि" ति सूत्रवचनात्।

चित्तम्, मनः, विज्ञप्तिः, विज्ञानमित्यपरपर्यायाः। तच्चित्तं सर्वेष्वेव बौद्धेषु प्रकृत्या प्रभास्वरम्, आलम्बनज्ञानलक्षणम्, क्षणिकम्, माध्यमिकान् विहाय परमार्थसच्च स्वीक्रियते। माध्यमिकैस्तु सापेक्षिकत्वात् संवृत्या तस्यास्तित्वमङ्गी-क्रियते। तच्च चित्तं स्वयम्प्रकाशकं भवति नवेत्येतस्मिन् विषये स्वस्ति तेषु परस्परं विप्रतिपत्तिः। सौत्रान्तिकाः, सर्वे विज्ञानवादिनः, योगाचारमाध्यमिकाश्च तस्य स्वयम्प्रकाशकत्वं स्वीकुर्वन्ति।

स्वसंवेदनवादिनः खलु स्वसंवेदनसिद्धये प्रदीपं दृष्टान्तत्वेनोपनयन्ति। यथा हि अन्धकारावृतवस्तुप्रतिपत्तये प्रदीप उपादीयते, न तथा दीपप्रकाशनाय प्रदीपान्तरम्। अपि तु स दीपः घटादि प्रकाशयन्नेव आत्मानमपि प्रकाशयति। एवं स्वसंवेदनमपि द्रष्टव्यम्। अस्यायमर्थो यत् प्रदीपः आत्मप्रकाशनाय यथा परनिरपेक्षः सन् स्वहेतुप्रत्ययेभ्यस्तथैवोत्पद्यते, एवं जडस्वभावव्यावृत्तात्मतया स्वहेतुप्रत्ययेभ्य उत्पत्तिरेव ज्ञानस्य प्रकाशान्तरनिरपेक्षस्य आत्मप्रकाशता स्वसंवेदनमुच्यते। यथोक्तं तत्त्वसंग्रहे—

विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते।
इयमेवात्मसंवित्तिरस्य याऽजडरूपता॥ १९९९ का०

स्थविरवादिनः, वैभाषिकाः, सूत्राचारमाध्यमिकाः, प्रासङ्गिकमाध्यमिकाश्च ज्ञानस्य स्वसंवेदकत्वं नोररीकुर्वन्ति। यथा तयैवासिधारया सैव असिधारा न शक्यते छेत्तुम्, न तेनैव अङ्गुल्यग्रेण तदेव अङ्गुल्यग्रं शक्यते स्प्रष्टुम्, एवमेव तेनैव चित्तेन तयैव चित्तं न शक्यते द्रष्टुमिति। प्रदीपदृष्टान्तोऽपि विसदृशत्वान्न समीचीनः। तथाहि—प्रदीपो घटादिवत् पूर्वं तमसावृतो न भवति, येन तस्य प्रकाशनं युज्येत। तस्माद् दीपो नैव प्रकाश्यतेऽतः विसदृशत्वान्न प्रदीपदृष्टान्तात् स्वसंवेदनसिद्धिः।

तत्र यदुक्तं विज्ञानं स्वहेतुप्रत्ययेभ्यो जडरूपेभ्यो व्यावृत्तमुपजायते, तस्य याऽजडरूपता सैवात्मसंवित्तिरित्यत्र माध्यमिका एवं प्रतिविदधते—यो हि भावो हेतुप्रत्ययेभ्यो जायते स निःस्वभावो भवति। स्वभावाभावे गगनोत्पलस्येव आत्मसंवेदनं न युक्तम् न चापि जडस्वभावता मध्यमकवादिनं प्रति परमार्थतः कस्यचित् सिद्धा, येन जडव्यावृत्तम् अजडं स्वसंवेदनं स्यात्। तस्मान्निःस्वभावतया न कथंचिदपि स्वसंवेदनसिद्धिः।

वैभाषिकाः, सौत्रान्तिकाः, युक्त्यनुयायिनो विज्ञानवादिनः, माध्यमिकाश्च षड् विज्ञानान्येव स्वीकुर्वन्ति। स्थविरवादे यद्यपि चित्तस्य एकोननवतिः, एकविंशत्युत्तरैकशतं वा विभागा दृश्यन्ते; तथापि तेषां सर्वेषां पूर्ववत् षट्सु विज्ञानेष्वेवान्तर्भावो भवति। षड् विज्ञानानि, यथा—चक्षुर्विज्ञानम्, श्रोत्र-विज्ञानम्, घ्राणविज्ञानम्, जिह्वाविज्ञानम्, काय्यविज्ञानम्, मनोविज्ञानञ्च। आगमानुयायिनो विज्ञानवादिन अष्टौ विज्ञानानि आमनन्ति। तैः षड्विज्ञानाति-रिक्तम् आलयविज्ञानं क्लिष्टमनोविज्ञानञ्चेति विज्ञानद्वयमाम्नायते।

आलयविज्ञानस्यास्तित्वविषयेऽस्ति बौद्धेषु महान् विवादः। आगमानुयायिनो योगाचाराश्च तन् मनुते। आलयविज्ञानस्यास्वीकारे क्लिष्टं मनो-विज्ञानं स्वभावतः एव निवृत्तं भवति, आलयविज्ञानालम्बकत्वात्तस्य। अतोऽवशिष्टाः सर्वे षड्विज्ञानवादिन एव। भावविवेकेन तु स्वमध्यमकहृदये लिखितं यद् विज्ञानवादिभिरालयविज्ञाननाम्ना आत्मैव संस्थापितः। अस्ति केवलं नाममात्रभेदस्तत्र। अतस्ते तैर्थिकनिर्विशेषाः एव।

आलयविज्ञानवादिनस्तु आलयविज्ञानस्यावश्यस्वीकार्यत्वं प्रतिपादयन्ति। ते ह्येत्थं संगिरन्ते—आलयविज्ञानानभ्युपगमे असंज्ञिसमापत्तेः, निरोधसमापत्तेः, बन्धमोक्षव्यवस्यायाश्चोपपादनमशक्यमिति। यथोक्तम् अभिधर्मे—

अनादिकालिको धातुः सर्वधर्मसमाश्रयः।
तस्मिन् सति गतिः सर्वा निर्वाणाधिगमोऽपि वा॥

तथा हि—स्थविरवादिनां वैभाषिकाणां च मते असंज्ञिसमापत्ति-निरोध-समापत्त्याद्यवस्थासु चित्तचैतसिकानां सर्वथा अप्रवृत्तिर्भवति, अथावसाने च तासामवस्थानां पुनस्तथैव चित्तचैतसिकाः प्रवर्तन्ते। अत्र विषये आलयवादिन –

यदि एतास्ववस्थासु चित्तचैतसिकानां सर्वथा निरोधो भवति, तथा सति पूर्वकृतशुभाशुभकर्मसंस्काराणां कस्यचिदाधारस्याभावे संसारप्रवृत्तेरुच्छेदः, कुशला-कुशलकर्मणा च व्यर्थत्वापत्तिरित्येवमधिक्षिपन्ति। विज्ञानवादे तु एतास्ववस्था-स्वप्यालयविज्ञानस्यास्तित्वं स्वीक्रियतेऽतस्तेषां मते कर्मणां व्यर्थत्वापत्तेः संसार-प्रवृत्तेर्वा उपच्छेदस्य नावसरः। एतद्दोषपरिजिहीर्षया सौत्रान्तिकाः खलु अवस्था-स्वेतासु यद्यपि सूक्ष्ममनोविज्ञानस्यैकस्य अस्तित्वमङ्गीकुर्वन्ति, तथाप्यतिदुर्बलत्वात् सर्वदाऽनवस्थितत्वाच्च तस्य नेष्टसिद्धिरिति विज्ञानवादिनामसन्तोषः। प्रासङ्गिकमाध्यमिकास्त्वेवं मन्यन्ते—यद्यप्यसंज्ञिनिरोधसमापत्त्याद्यवस्थास्वस्ये चित्तचैतसिका न भवन्ति, तथापि तस्मिन् काले समापत्तिचित्तस्य सद्भावात्तदेव संस्काराणामधिष्ठानं संसारप्रवृत्तेश्च निमित्तमिति न संसारप्रवृत्तेरुच्छेदो न वा कर्मव्यर्थत्वप्रसङ्गः।

आलयविज्ञानवादिनां मते समाहितावस्थायाम् असमाहितावस्थायाम् आर्या-वस्थायां पृथग्जनावस्थायां सर्वदैवालयविज्ञानमुपतिष्ठते। तदेव च सर्वेषां क्लेशानां क्लेशबीजानां चाधिष्ठानमिति हेतोर्यदा क्लेशानां क्लेशबीजानां प्रहायकं दर्शनमार्गचित्तं भावनामार्गचित्तं वोदेति तदा ते आलयविज्ञानस्थितान् क्लेशान् तद्बीजानि वा नाशयतः। आलयविज्ञानानभ्युपगमे दर्शनमार्गावस्थायां भावना-मार्गावस्थायां वा ते क्लेशाः कुत्र स्थास्यन्ति, येषां प्रहाणं ताभ्यां चित्ताभ्यां

क्रियते ? न ते क्लेशा दर्शनमार्गचित्ते भावनामार्गचित्ते वा स्थातुं शक्नुवन्ति, अतिविशुद्धत्वात्तयोः । अतः क्लेशप्रहाणाभावे संसारनिवृत्तिरपि आलयविज्ञानाभावे दुःशकेति तेषामभिक्षेपः ।

षड्विज्ञानवादिनः खल्वेवं समादधते—यथा प्रकाशेनान्धकारस्य प्रहाणं भवति, तथैव दर्शनभावनामार्गचित्ताभ्यां क्लेशानां तद्बीजानां च प्रहाणं भवति । अन्धकारस्य प्रहाणाय प्रकाशसंनिधौ तस्यावस्थितिर्यथा नावश्यिकी तथा दर्शनभावनामार्गसमये क्लेशानामुपस्थानं नावश्यकम् । यथा च प्रकाशोऽसम्मुखस्थमेवान्धकारं नाशयति, तथा दर्शनभावनामार्गचित्तेऽपि असम्मुखस्थानेव क्लेशान् विघमतः । एवमालयविज्ञानाभावेऽपि संसारनिवृत्तिः सुस्थितैव ।

यथा संसारप्रवृत्तिः संसारनिवृत्तिश्च चित्तमेवाधारीकृत्य सुसम्पद्येते तथैवापरापरजन्मोपादानम्, कर्मफलसम्बन्धः, प्रत्यभिज्ञानम्, कर्त्तृत्वम्, भोक्तृत्वं सर्वमपि क्षणिकचित्तवादे चित्ताधारेणैव सुसम्पन्नं भवति । एतदर्थमात्मसत्तास्वीकरणं नावश्यकमिति बौद्धसमयः । एतेषां सर्वेषां युक्तिभिरुपपादने भूयान् कालोऽपेक्ष्यतेऽतो दिङ्मात्रं निर्दिश्यात्रैव विरम्यते ।

# मेघदूते यक्षस्य प्रिया

## डॉ० अमरनाथपाण्डेयः

कालिदासो मेघदूते यक्षस्य प्रियां निरतिशयकामनीयकेन मण्डयामास । सकलसहृदयमानसलालितस्याद्भुतरूपसम्भारस्य सकलापि कला कामपि कोटिमारोहत्यस्या वर्णन इति विदितमेव सर्वस्यास्य काव्यकौतुकाङ्कनमटाट्यमानस्य सुधीव्रातस्य । अस्या निर्माणेऽपूर्वा कापि रचना कवेरुद्वेल्लति, विविधप्रसङ्गानुबन्धे समुदेति कापि विलासक्रीडाश्लिष्टाशेषशेमुषीकस्य कवितासमुल्लासस्य कालिदासस्य, सौन्दर्यपरिपाटीघटनाव्यापारे मोदते कापि नूत्ना विमला प्रतिपदाङ्कनसृतिः, उच्छलति च कापि प्रगुणा मृद्वी कल्पनाधारा । पदे पदे तस्याः प्रसरति मुखसौरभ्यम्, विकीर्यते दन्तांशुच्छलेन प्रसादस्य दुग्धकुल्या, नरीनृत्यन्ते विभ्रमाः, चक्षुषां विक्षेपेषु कमलवनानि निर्मीयन्ते । यद्गभीरं समुपलालितं तस्या रूपं कविना तत्तु वचसामविषयः ।

यक्षपत्नी विधातुरपूर्वा सृष्टिः । न कापि तां कलयाप्यनुकर्तुमलम् ! सातिशेते स्त्रीरत्नेष्वपि भ्राजमानं रूपराशिं मधुरं वचसां क्रमं स्पृहणीयं विलासचेष्टितञ्च । कविः सोल्लासं तेने तस्या व्यापारान्, निबबन्ध पावनानि चरितानि, साक्षाच्चक्रे मनसो नैर्मल्यमुदात्तभावान् सौभाग्यञ्च । सा तन्वी श्यामा शिखरिदशना[1] पक्वबिम्बाधरोष्ठी कृशोदरी चकितहरिणीप्रेक्षणा गभीरनाभिः श्रोणीभारान्मन्दगतिः स्तनाभ्यामीषन्नम्रा विधातुराद्या सृष्टिरिव प्रतिभाति । यक्षेण सङ्गता सा लीलया क्रीडां चक्रे रतिफलं मधु पपौ नर्तयामास च शिञ्जावलयसुभगैस्तालैर्नीलकण्ठम् ।

---

१- स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लिष्टाः ।
दन्ता भवन्ति यासां तासां पदे जगत् सर्वम् ॥
मेघदूतम्, उत्तरभागः, श्लोक १९, मल्लिनाथटीका ।

प्रासादप्रसन्नायां सङ्गीतकनादितायां क्रीडाशैलशोभितायां वापीशीकरानन्दितायामलकायां दम्पत्योरनुदिनं प्रेम समुल्ललास, विस्रम्भकथा महतीं प्रीतिं जनयामास, सपीतिर्मदनपरवशतां निनाय, संवेशनानि रहःकेलिकौतुकं सञ्चारयामासुः। एवमलका भ्राजते। तत्र सम्भोगे यक्षपत्न्या गात्रयष्टिः परां कृशतामवाप। ते दिवसा गताः। ग्रहगृहीतो यक्षो निर्वासितः। तस्य प्रिया विरहवेदनया पीडिता नितरां म्लाना चक्रवाकीवैका खिन्ना तुहिनमथिता पद्मिनीवाजनिष्ट। मुखस्योपरि लम्बैश्चूर्णकुन्तलैः सा मेघागमनेन क्षीणकान्तेरिन्दोः प्रतिच्छन्द बभार, अधरोष्ठ उष्णनिःश्वासैर्विच्छायो बभूव, उच्छूने च प्रबलरुदितेन नेत्रे। सा भर्तुर्मङ्गलार्थं देवताराधने व्यापृता बभूव। कदाचिदनुमानभावितं वियोगे कृशं तस्याकारसादृश्यं लिलेख, कदाचित् पञ्जरस्थां प्रियवचनां सारिकां 'कच्चिद् भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेतो'ति पप्रच्छ, कदाचिद् धूलिमलिनांशुकेऽङ्के वल्लकीं निधाय यक्षनामाङ्कं विरचितपदं गीतमुद्गातुकामा नेत्रजलबिन्दुभिः क्लिन्नां तन्त्रीं कृच्छ्रेण प्रमृज्य कथञ्चित् स्वयमधिकृतां मूर्च्छनामपि विसस्मार, कदाचिद् देहलीदत्तपुष्पैर्विरहकालस्यावशिष्टान् मासान् गणयामास।

विरहदिवसेष्वेते विनोदा अङ्गनानामित्यभियुक्ताः।

दिवसे कर्मणि व्यापृतां तां वियोगो न पीडयति, रात्रौ तु विनोदरहितां पीडयत्येव। भूलुठनव्यतिकाराकुला सा विरहे दीर्घतरां त्रियामामुष्णैरश्रुभिर्गमयति। पत्युः स्मरन्ती तेन सहानुभूतान् तांस्तान् सातप्रसङ्गान् मनसि भावयन्ती, आभरणरहितां तनुं धारयन्ती, परुषमलकमुष्णनिःश्वासैर्विक्षिपन्ती, दुर्लभां निद्रामाकाङ्क्षन्ती, अयमितनखेन करेण स्पर्शक्लिष्टां कठिनविषमामेकवेणीं कपोलभागादपसारयन्ती, अञ्जनस्नैग्ध्यरहितमलकैरवरुद्धापाङ्गविस्तारं भ्रूविलासशून्यं नयनं बिभ्रती कं सचेतसं नार्द्रयति।

कविर्यक्षवध्वाः कमनीयं वपुः पावनं पातिव्रत्यं चोपन्यस्य संस्कृतसाहित्यमदभ्रं प्रसाधयामास। अनया कविः समुद्घाटयति नारीचरितस्य परां काष्ठाम्। अलकाभरणभूता कान्ताऽनन्तगुणसमन्विता लोकान् पुनाति, साहित्यवीथीं

रचयति, सहृदयानावर्जयति, कल्पनातसोऽस्तनुते । कालिदासस्य मेघदूतमेवैका कृतिर्यत्र वियोग एव परिसमाप्तिर्भवति ।

कामस्यानेका दशा अपि निबद्धाः । 'आलोके ते निपतति पुरा....'[1] इति 'उत्सङ्गे वा मलिनवसने........'[2] इति च श्लोकयोर्मनःसङ्गं 'शेषान् मासान् विरहदिवसस्थापितस्यावधेर्वा.......'[3] इति श्लोके सङ्कल्पम्, 'सव्यापारामहनि न तथा पीडयेद् विप्रयोगः.........'[4] इति श्लोके जागरम्, 'आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां.......'[5] इति श्लोके कृशताम्, 'पादानिन्दोरमृतशिशिराञ्जालमार्गप्रविष्टान् .......'[6] इति श्लोकेऽरतिम्, 'निःश्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीं ....'[7] इति श्लोके ह्रीत्यागम्, 'आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा.........'[8] इति श्लोके उन्मादम्, 'सा संन्यस्ताभरणमबला पेशलं धारयन्ती .......'[9] इति श्लोके च मूर्च्छां निबबन्ध कविः[10]। प्रवासविप्रलम्भे नायिकाया अङ्गचेलमालिन्यमेकवेणीधारणं निःश्वासभूमिपातादि च वर्ण्यन्ते ।[11]

---

१. मेघदूतम्, उत्तरभागः, श्लोक २२ ।
२. ,, ,, श्लोक २३ ।
३. ,, ,, श्लो० २४ ।
४. ,, ,, श्लो० २५ ।
५. ,, ,, श्लो० २६ ।
६. ,, ,, श्लो० २७ ।
७. ,, ,, श्लो० २८ ।
८. ,, ,, श्लो० २९ ।
९. ,, ,, श्लोक ३० ।
१०. दृङ्मनःसङ्गसङ्कल्पा जागरः कृशतारतिः ।
ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥
—मेघदूतम्, उत्तरभागः, श्लो० ३०, मल्लिनाथटीका ।
११. प्रवासो भिन्नदेशित्वं कार्याच्छापाच्च सम्भ्रमात् ।
तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः ॥
निःश्वासोच्छ्वासरुदितभूमिपातादि जायते ।

'उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां ......'[1] इति श्लोके मालिन्यम्, 'गण्डाभोगात् कठिनविषमामेकवेणीं करेण........'[2] इति श्लोके एकवेणी-धारणम्, 'निःश्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीं.......'[3] इति च श्लोके निःश्वासं वर्णयति कविः ।

वियोग उपनिबध्यमानानां विनोदानामपि तत्र तत्रानुषङ्गानुकूलः सन्निवेशो विहितः । विनोदोपायाश्चत्वारो[4] निगदिताः—प्रियतमसदृशानुभवनं चित्रकर्म स्वप्नसमये दर्शनं तदङ्गस्पृष्टस्पर्शनञ्च । 'मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती'[5] त्यनेन चित्रकर्म वर्णयति, 'मत्सम्भोगः कथमुपनयेत् स्वप्नजोऽपीति निद्रामि'[6] त्यनेन च स्वप्नसमये दर्शनम् । विनोदार्थं यक्षः प्रकृतेर्वस्तूनि पश्यति चित्रं लिखति पवनं च स्पृशति । 'श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातमि'[7]त्यादिना प्रियतमसदृशानुभवम्, 'भित्त्वा सद्यः किसलयपुटान् देवदारुद्रुमाणां ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ता'[8] इत्यादिना च तदङ्गस्पृष्ट-स्पर्शनं वर्णयति ।

यक्षपत्नी पद्मिनी नायिकाऽसीत् । पद्मिन्यास्तावल्लक्षणम्—'भवति कमलनेत्रा नासिका क्षुद्ररन्ध्रा अविरलकुचयुग्मा चारुकेशी कृशाङ्गी । मृदुवचन-

---

१. मेघदूतम्, उत्तरभागः. श्लो० २३ ।
२. ,, ,, श्लो० २९ ।
३. ,, ,, श्लो० २८ ।
४. वियोगे योगे वा प्रियतमसदृक्षानुभवनं
ततश्चित्रं कर्म स्वप्नसमये दर्शनमपि ।
तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि
प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि विदितः ॥'—गुणपताका
५. मेघदूतम्, उत्तरभागः, श्लो० २२ ।
६. ,, ,, श्लो० २८ ।
७. ,, ,, श्लो० ४१ ।
८. ,, ,, श्लो० ४४ ।

सुशीला गीतवाद्यानुरक्ता सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥' 'तन्वी श्यामा शिखरिदशने'[1]त्यादिपद्ये यक्षपत्न्याः सौन्दर्यनिरूपणे तस्या पद्मिनीत्वं प्रकाश्यते। अपरञ्च 'तस्मिन् काले जलद यदि सा लब्धनिद्रासुखा स्याद्.......'[2] इति श्लोके प्रकाश्यमानेन यामव्यापिसुरतेन नायिकायाः पद्मिनीत्वं स्थिरमेव। प्रमाणन्तु यथा—'एकवारावधिर्यामो रतस्य परमो मतः। चण्डशक्तिमतोर्यूनो-रुद्भटक्रमवर्तिनोः[3] ॥'

यक्षः स्वप्रियामभिलक्ष्य कान्ता गेहिनी, तव (मेघस्य) सखी, मृगाक्षी, कामिनी, सीमन्तिनी, अबला, चण्डी, चटुलनयना, कल्याणी, असितनयनेत्येतानि-पदानि प्रयुयुजे। विविधप्रसङ्गानुरोधि पदानामेतेषां सार्थक्यं व्यञ्जनक्षमत्वं च। यक्षः प्रथमं कान्तेति पदं प्रयुयोज। 'कम्यते स्मेति कान्ता' इति व्युत्पत्त्योपलभ्यमानेनार्थेन प्रियां प्रति स्वस्य हार्दस्य प्रकटनं सहृदयसंवेद्यमेव।

अनन्तरं गेहिनीति पदं प्रयुक्तम्। यक्षस्य गृहं पत्न्यैव शोभते। वस्तुतस्तस्य स्वामिनी सैवेति पदमर्यादयोपलभ्यते। अनन्तरं मेघसम्बन्धद्योतनार्थं तव सखीति निर्दिदेश। प्रथमं यक्षस्य पत्नी पश्चाद् भ्रातुर्मेघस्य सखीति समीचीनः क्रमः। पुनः कान्तेति पदेन यक्षस्य प्रियागतमानसत्वं नितान्तमुज्ज्वलं भवति। 'ते सखी'ति 'साध्वी'ति च प्रयुञ्जानेन यक्षेण मेघद्वारा तस्याः पूतचरितायाः आह्लादनमिष्टमित्यहो महाकवेर्वचनविन्यासचातुरी। नेत्रं वर्णयता यक्षेण मृगाक्ष्या इति पदेन प्रसङ्गपरिरम्भो परिकरः क्रोडीकृत इति चेतो मोमुद्यते।

मानिनीति पदं मानवत्या विशेषोत्कर्षप्रकाशनार्थं प्रयुक्तमतस्तदनुभावा-नुकूलमाचारं निर्दिशता कविना साधु प्रथितम्। यथा महानुभावां प्रति व्यवहार इष्टस्तथैव मेघद्वाराऽभिप्रेत इति 'तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन

---

१. मेघदूतम्, उत्तरभागः, श्लो० १९।
२. ,, ,, श्लो० ३४।
३. मल्लिनाथटीकायामुद्धृतं रतिसर्वस्ववचनम् (उत्तरभागः, श्लो० ३४)

'प्रत्याश्वस्तां समभिनवैर्जालकैर्मालतीनाम् । विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथा ॥'[1] इति भङ्ग्या प्रकाशते। सीमन्तिनीति[2] पदेन तस्याः सौभाग्यं प्रकाश्यते। सुलभविपदां प्राणिनां प्रसङ्गेऽबलेति[3] पदं हृद्यमेव। 'हन्तैकस्मिन् क्वचिदपि न ते चण्डि सादृश्यमस्ती'[4]ति चण्डीति पदस्य वैशिष्ट्यं मल्लिनाथ एवं निर्दिशति—"उपमानकथनमात्रेण न कोपितव्यमिति भावः। क्वचिदपि कस्मिन्नप्येकस्मिन् वस्तुनि ते सादृश्यं नास्ति। अतो न निर्वृणोमीत्यर्थः। अनेनास्याः सौन्दर्यमनुपममिति व्यज्यते।" इति। चटुलनयनेति[5] पदेन यक्षपत्न्याः कामनीयकातिशयः प्रकाश्यतेऽतस्तस्या वियोगे यक्षस्य व्यथाया गाढत्वमुपपन्नमेव। अथ कल्याणीति पदप्रयोगो[6] ध्यातव्यः। कल्याणी सुभगेति मल्लिनाथः। यक्षस्य जीवनधारणस्याधारः पत्न्याः सौभाग्यमेवेति मनसि कृत्वा 'नन्वात्मानमि' त्यादिश्लोके कविः कल्याणीति पद प्रयुयुजे। 'त्वत्सौभाग्येनैव जीवामीति भावः' इति रहस्यमाविश्चकार मल्लिनाथः। 'एतस्मान्मां कुशलिनमभिज्ञानदानाद् विदित्वा मा कौलीनादसितनयने मय्यविश्वासिनी भूरि'[7]ति कौलीनप्रसङ्गमुपस्थापयता कविनाऽसितनयनेति पदं प्रयुक्तम्। तत्त्वत्र साधु सङ्गच्छते। अन्ते'ते[8]सखी'ति प्रयुज्य मेघं प्रत्यात्मनः सौहार्दं तस्य च विश्वासभाजनत्वं सूचयति। एवं प्रयुक्तानि पदानि तेषु तेषु प्रसङ्गेषु परमां विच्छित्तिमावहन्तीत्युक्तम्।

---

१. मेघदूतम्, उत्तरभागः, श्लो० ३५।
२. ,, ,, श्लो० ३७।
३. ,, ,, श्लो० ३८।
४. ,, ,, श्लो० ४१।
५. ,, ,, श्लो० ४५।
६. ,, ,, श्लो० ४९।
७. ,, ,, श्लो० ४१।
८. ,, ,, श्लो० ५०।

कविना यक्षस्य प्रियायाः सम्भोगपक्षस्त्वत्र तत्र निर्दिष्टः। वियोगपक्षस्तु विस्तरेण वैशद्येन कमनीयतया च प्रसाधितः। वियोगे पतिव्रताया ये व्यापाराः स्मृतिकारैर्निर्दिष्टास्तेषामपि विन्यासः कृतः।

मेघदूते न यक्षस्य नामोपलभ्यते, न तु यक्षपत्न्याः। अनेन दम्पत्योरपूर्वा कापि सृष्टिः समुल्लसति। प्रेम्णः सौन्दर्यस्य च या पराकाष्ठाऽस्ति सा कविना समाधिना साक्षात्कृता। तस्या एव वर्णनं कृतम्। किमपि रहस्यभूतं तत्त्वमाविष्कृतं कालिदासेन मेघदूते इत्यभिधानयोरनिर्देशेनोपलभ्यते।

# दर्शनविज्ञानयोर्दर्शनस्य वैशिष्ट्यं तत्समन्वयश्च

श्रीविजयमित्रशास्त्री

दर्शनव्यचिख्यासया प्रवर्तमानानामस्माकं दृष्टिः सर्वप्रथमं दर्शनशब्दमेवाभिलक्षीकरोति । दर्शनशब्दः 'दृशिर् प्रेक्षणे' इति धातोर्निष्पद्यते । यस्य दर्शनं विषयीकरणं साक्षात्कारो वेति सम्यगर्थः परिस्फुटति । दृश्यतेऽनेनेति दर्शनम्, करणे ल्युट् ।

अधुना स्वभावत एवायं प्रश्नः समुपजृम्भते यद्भोः दर्शनेन वयं किं पश्यामः ? अस्यैव प्रश्नस्य किञ्चैतन्मूलकस्यान्यस्यापि प्रश्नसमूहस्योत्तराणि समस्तदर्शनग्रन्थेषु विस्पष्टं व्याख्यातानि । अस्याशेषस्य चराचरस्य जगतस्त्रिगुणात्मिकायाः प्रकृतेर्वा त्रिगुणातीतस्यात्मतत्त्वस्य च ज्ञानं दर्शनादेव जायते । दर्शनस्यायतनमीदृशं विशालमस्ति यज्ज्ञानस्य कापि शाखा न ततो बहिर्गन्तुं सुशका ।

दुःखनिवृत्तये, सन्देहनिरासाय, ज्ञानप्राप्तये, मोक्षसिद्धये, परमानन्दोपलब्धये च तत्वज्ञानमपेक्ष्यते । तत्त्वज्ञानं विना न कदापि मुक्तिस्सम्भवति । एतत्तत्वज्ञानञ्च वयं दर्शनादेव प्राप्नुमः ।

ज्ञानेन्द्रियजन्यप्रत्यक्षज्ञानातीतप्रकृत्यात्मनोस्तत्त्वज्ञानं दर्शनम् । प्रत्यक्षसिद्धवस्तूनां स्वरूपगुणक्रियाजातिभावाभावसम्बन्धे ये प्रकृतिसिद्धनियमास्तेषामाविष्करणमेव विज्ञानस्य साध्यं विषयीभूतञ्च । अत्रैव चास्य परिणतिरपि व्याख्याता विज्ञानविद्भिः । विज्ञानेन न किमपि नूतनमुद्भाव्यते । किन्तर्हि आविष्क्रियते ? प्रकृतिसिद्धानां नियमानामाविष्करणमेव विज्ञानमिति फलितोऽर्थः । विज्ञायतेऽनेनेति विज्ञानम्, विशिष्टं ज्ञानमिति वा । विपूर्वात् 'ज्ञा अवबोधने' इत्यस्माद् धातोः करणे ल्युट् ।

दर्शनमात्मतत्त्वमालोचयति, विज्ञानञ्च प्रकृतिकार्यभूतञ्जगत्तत्त्वम् । दर्शनमसीमं विषयमुन्मेषयति, विज्ञानञ्च ससीमं विषयं प्रकाशयति । दर्शनं बहुत्वे खल्वेकत्वमनुसन्धत्ते, विज्ञानं खल्वेकस्मिन् विभागश्चविभागपरिकल्पनया बहुत्वव्यापारे व्यवसितं भवति । दर्शनं कारणमनुसन्धत्ते, विज्ञानञ्च कार्यमालोचयति । दर्शनं ह्यनुलोमयुक्तिमाश्रित्य प्रवर्तते, विज्ञानञ्च प्रतिलोमयुक्तिमाश्रयति । दर्शनं त्रिविधदुःखविनाशेन परलोकं साधयति, विज्ञानञ्च वर्तमानकाले सुखवृद्ध्यै, दुःखह्रासाय च यतते । दर्शनं हि सर्वकालमधिकृत्य प्रवर्तते, विज्ञानञ्च वर्तमानकालमात्रम् । विज्ञानं जडात्मिकां प्रकृतिं तच्छक्तिञ्चानुसन्धत्ते, दर्शनञ्च सर्वशक्तिस्रोतोमूलभूतं किमप्यनिर्वचनीयमात्मतत्त्वं परिशीलयति ।

नानाविधदुःखज्वालामालासङ्कुलितेऽस्मिन् जगति सर्वे जनाः दुःखविनाशायैव निरन्तरं प्रयत्नशीलाः दृश्यन्ते । दुःखकारणानुसन्धाने प्रवर्तमानाः पुरुषाः दर्शनमेवात्मसंबलमुपलभन्ते । तदुक्तं शर्मण्यदेशरत्नेन दार्शनिकपुङ्गवेन श्रीशोपेनहावरमहोदयेन :—

A man becomes a philospher by reason of a certain perplexity that arises from the contemplation on the world.

"कस्मिंश्चिद्दुःखे निमग्नः पुरुषो यदा तत्कारणानुसन्धाने प्रवर्तते तदा सः दार्शनिकत्वमुपयाति । इयं दुःखानुभूतिश्च तस्मिंस्तदैव जागर्ति, यदा सोऽस्य विचित्रस्य जगतो विषये गाढं निमग्नो भवति ।"

अन्यः शर्मण्यदेशीयः दार्शनिकः श्री उडम्बारउङग-महोदयो वक्ति—

Philosophy is the science of principles.

"दर्शनं हि सिद्धान्तानां विज्ञानमस्ति । अर्थात् वयं दर्शनाध्ययनेन प्रसिद्धानां सिद्धान्तानां ज्ञानं प्राप्तुं शक्नुमः ।"

अन्यः शर्मण्यदेशीयः विद्वान् श्री हरबर्टस्पेंसर-महोदयो ब्रूते :—

Philosophy is the elaboration of conceptions

"दर्शनं ह्यस्माकं विचाराणां विस्तारोऽस्ति, अर्थात् दर्शनाध्ययनेनास्माकं विचाराः विराड्रूपम्प्रापयितुं शक्यन्ते ।"

अन्यो विद्वान् डा० कुञ्जमहोदयो ब्रूते :—

"Philosophy is the complete development of the thought ......... ( it ) is the understanding and explanation of all things."

"अस्माकं विचाराणाम्पूर्णं विकसितं रूपमेव दर्शनमस्ति । दर्शनं हि सर्वेषां पदार्थानां व्याख्यानुभूतिश्चास्ति ।"

ज्ञानं विना त्रिविधदुःखनिवृत्तिर्न कदापि सम्भवा । अतोऽयं फलितोऽर्थः यद्येन शास्त्रेण दुःखनिवृत्तिर्भवेत् तद्दर्शनमुच्यते । भारतीयदर्शनानां प्रकृतिज्ञान-परम्परया खल्वात्मतत्त्वज्ञानार्जन एव तात्पर्यमिति पर्यवसितम् । बृहदारण्य-कोपनिषद्यप्येव समाम्नायते :—

'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति'

आत्मा खल्वन्वेष्टव्यः । अयमेव परमः पुरुषार्थः । एतदेव कपिलमुनिना साङ्ख्ये समुद्भासितं भिन्नरूपेण :—

अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः । दैहिकदैविकभौतिक-रूपास्त्रिविधास्तापाः । एतेभ्यस्त्रिविधतापेभ्यः सर्वथा मोचनमेव पुरुषजन्म-साफल्यम् । इदमेव तथ्यं न्यायदर्शने गौतमेन विशिष्टरूपेण प्रत्यपादि :—

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वा-भासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥

समस्तं खल्विदं दृश्यमदृश्यञ्च जगदेष्वेव षोडशपदार्थेषु विभक्तमस्ति । तेषां पदार्थानां तत्त्वज्ञानेन सर्वविधदुःखनिवृत्तिर्जायते, परमानन्दप्राप्तिश्च भवति ।

इदमेव तत्त्वं महर्षिव्यासेन वेदान्तदर्शने भिन्नरूपेण प्रतिपादितम् :—

अथातो ब्रह्मजिज्ञासा

सर्वं परित्यज्य ब्रह्मज्ञान एव प्रयत्नः कार्यः। इदं सर्वं जगत् यस्मात्परमेश्वरात् प्रादुर्भूतम्, यस्मिश्च विलीनं भवति तमेव सर्वशक्तिमन्तं ज्योतिष्मन्तम्परमेश्वरं ज्ञातुं यतध्वम्।

ईशवीयषोडशशताब्दिपर्यन्तम्भूमण्डले दर्शनस्य महत्त्वं विख्यातमासीत्। तदानीं विज्ञानं द्वितीयस्यां कक्षायामासीत्। ईशवीयसप्तदशशताब्द्यां पाश्चात्य-देशेषु महत्यौद्योगिकी क्रान्तिस्सञ्जाता। यन्त्राणां यान्त्रिक-सम्भाराणाञ्च महान् विस्तारः समजायत। तेनैव संरम्भेण विज्ञानस्यापि शक्तिर्वृद्धिमाप। शनैः शनैः दर्शनस्य विलोप इव प्रारब्धः। किन्तु तदानीमपि भारते दर्शनस्य वैशिष्ट्यमासीत्। सम्प्रति तु न केवलं पाश्चात्य-देशेष्वपि तु पौरस्त्यदेशेष्वपि विज्ञानस्य साम्राज्यं दृष्टिपथमारोहति। वस्तुतस्त्व-द्यतनविश्वस्याशान्तिहेतुर्दर्शनस्य ह्रासस्तथा विज्ञानस्योत्कर्ष एवास्ति।

दर्शनं ह्यस्माकमन्तर्दृष्टिमुन्मेषयति, विज्ञानञ्चास्माकं बाह्यदृष्टिं विस्फाल्य स्थूलं विश्वं द्रष्टुं प्रेरयति। अन्तर्दृष्टिविकासार्थमार्यदर्शनानि मनुष्यान् योगाभ्यासाय समुपदिशन्ति। योगयुक्तो भूत्वा सम्प्रज्ञातसमाधौ यदा मनुष्यः प्रतिष्ठते तदानीं स प्रमाणवृत्त्या समस्तं तत्त्वजातम्, तस्य कार्यकारणभाव-सम्बन्धम् उत्पत्तिम् अवस्थानं विपरिणामं वृद्धिं ह्रासं विनाशञ्चेत्यादि परिवर्तनक्रमस्वरूपं यथार्थरूपेण पश्यति। तस्मिन् समये तदात्मनि सर्वं ज्ञानम-खण्डरूपेण स्वयं प्रत्यक्षम्भवति।

असम्प्रज्ञातसमाधौ प्रत्यक्षीभूतं ज्ञानं सर्वविधभ्रमरहितं भवति। तस्मिन् ज्ञाने भ्रमस्य संशयस्य वा लेशोपि नावतिष्ठते। एवंविधाः असम्प्रज्ञात-समाधिना तत्त्वद्रष्टारः ऋषयो मुनयश्च देशकालबन्धनमुक्ताः भवन्ति। एतादृशा एव ऋषयो मुनयश्च तत्त्वदर्शिनः आप्ताः दार्शनिका वा प्रोच्यन्ते। एतादृशतत्त्व-ज्ञानिनमुद्दिश्य महर्षियास्कः प्रोवाचः—

"साक्षात्कृतधर्माणः ऋषयो बभूवुः।

न्यायदर्शनव्याख्याता वात्स्यायनमुनिश्च प्राह —

"आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्य चिख्यापयिषया प्रवर्त्तमान इत्याप्तः। ऋष्यार्यम्लेच्छानां समानं लक्षणम्।"

यथार्थरूपेण तत्त्वसाक्षात्कर्त्तारः ऋषय आप्ता उच्यन्ते। एते आप्ता भूमण्डले सर्वत्र सर्वदा चोत्पद्यन्ते। आर्यजातिषु अनार्यजातिषु म्लेच्छजातिषु वा एतादृशानां तत्त्वदर्शिनां महात्मनां जन्मसम्भवोऽस्ति।

असम्प्रज्ञातसमाधौ प्रविष्टस्य मनुष्यस्यान्तःकरणमत्यन्तं निर्मलम्भवति। तत्र-सर्वं ज्ञानं दर्पणे बिम्बमिव प्रतिभाति। इदमेव दर्शनमित्युच्यते। इदमेव दर्शनं लिपिबद्धं सत् महतां दर्शनग्रन्थानाङ्कारणम्भवति। एवं हि नानाविध-दर्शनानाम्प्रादुर्भावसरणिः। एवञ्च दर्शनकर्त्तारं आर्यावर्त्ते गौतमकपिलकणाद-पतञ्जलि-व्यास-जैमिनिप्रभृतयस्तथा यूरप-रूस-अमेरिकादिभूभागेषु च शोपनहावर-काण्ट-हेगलर-हर्बर्टस्पेन्सर-इमर्सन-थोरो--पाइथागोरस--प्लेटो--अरिस्टाटिलप्रभृतयः समभूवन्।

असम्प्रज्ञातसमाधौ दृष्टतत्त्वानामेव लेखनं यस्मिन्दर्शने भवति तदेव यथार्थ-दर्शनम्, तदेव च 'आर्षम्' इत्युच्यते। असम्प्रज्ञातसमाधिजन्यज्ञानेन सह बाह्य-ज्ञानेन्द्रियजन्यज्ञानानाङ्कल्पनाप्रसूतज्ञानानाञ्च यस्मिन् दर्शने मिश्रणम्भवति तदेव 'अयथार्थदर्शनम्' अनार्षदर्शनं वेति प्रोच्यते। एतादृशदर्शनन्तु दर्शनाभास इति वक्तुं शक्यते। एवंविधदर्शनक्षेत्रे भारतीयेषु चार्वाक-वाममार्गि-शैव-शाक्त-जैनबौद्धप्रभृतिदर्शनानि च पाश्चात्त्येषु फ्रायड-जुङ्ग-एपिकुरस-कार्लमार्क्स-प्रभृतीनान्तदनुयायिनाञ्च दर्शनानि समायान्ति। एतादृशान्येव दर्शनान्य-नार्षाणीत्युच्यन्ते। आर्षाणि दर्शनानि लोकानुन्नयन्ति, अनार्षाणि च दर्शनानि लोकानधः पातयन्तीति विज्ञेयम्।

## विज्ञानम्

कस्यचित् पदार्थस्य बाह्याभ्यन्तरपरीक्षणं प्रत्यक्षीकरणं मानवजीवनोपयोगी-करणं लोकविध्वंसिकार्योपयोजनं वा विज्ञानस्य विषयः। विज्ञानं ह्यस्माकं

वर्तमानं जीवनं सुखमयं विदधाति । प्रकृतिस्थपदार्थान् समीक्ष्य तान् लोकोपयोगितां प्रापयति । जीवनोत्तरकालिकीम्पारलौकिकीं वा वार्त्तां विज्ञानं नाकलयति । इदं कार्यं तु ज्ञानस्यास्ति न तु विज्ञानस्य । ज्ञानेनैव हि लोकपरलोकयोश्चिन्ता कार्या । ज्ञानं सूक्ष्ममस्ति, विज्ञानञ्च स्थूलम् । अतएव कोशकारेणोक्तम् :—

मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।

मुक्तौ धीः ज्ञानमुच्यते । शिल्पे तद्विषयकशास्त्रे च विज्ञानशब्दव्यवहारो भवतीति विवेकः । ज्ञानं हि मुख्यतः आत्मतत्त्वविषयकम्, विज्ञानञ्च प्रत्यक्षतः बाह्येन्द्रियजन्यज्ञानविषयकम् ।

## दर्शनस्याभ्यर्हितत्वम्

दर्शनं हि सकलान् पदार्थानन्तर्दृष्ट्या पश्यति । विज्ञानञ्च बाह्यदृष्ट्या प्रत्यक्षीकरोति । दर्शनं हि केवलमन्तर्दृष्ट्यैव सदा कार्यं करोति, विज्ञानञ्च बाह्यदृष्ट्या तत्कल्पकयान्त्रिकसाधनैरन्यानेकोपादानैश्च सहायतामनुगृह्णाति । दर्शनेन यस्साक्षात्कारो भवति तत्र तु भ्रान्तेर्लेशोऽपि नावतिष्ठते । विज्ञानेन यः साक्षात्कारो भवति तत्र तु त्रुटिबाहुल्यं संशयश्चावशिष्यते । दर्शनसाक्षात्कारकरणे बाह्यसाधनानां बृहदट्टालिकानां भीमकाययन्त्राणां विपुलधनानाञ्च न काप्यावश्यकता भवति । विज्ञानसाक्षात्करणे तु बृहद्भवनानि, विपुलधनानि भीमकाययन्त्राणि चापेक्ष्यन्ते । यस्याः परमाणुशक्तेर्दर्शनमुञ्छवृत्त्या जीवनं यापयता महर्षिकणादेन कृतम्, तामेव परमाणशक्तिमन्वेषितुमद्य अमेरिका-रूस-प्रभृति-देशेषु खर्वपरिमितानि रूप्यकाणि व्ययीक्रियन्ते । एतेन विश्वविनाशलीलापि समुपतिष्ठते । एतावद्धनजनश्रममहिम्नोऽपि परमाणुशक्तिज्ञाने सन्देहः पूर्ववदेव बद्धमूलो वर्तते । कोयम् परमाणुः ? का शक्तिरस्य ? कुतो वास्याविर्भावः ? अर्थात् कियन्तः पदार्थाः परमाणुशक्तिप्रकाशकाः सन्ति ? अस्याः शक्तेः पूर्णं विवरणं प्राप्स्यते न वेति ? महर्षिकणादेनान्तर्दृष्ट्या परमाणुशक्तेर्ज्ञानम्प्राप्तम् । आधुनिकविज्ञानेन च बाह्यदृष्ट्या यन्त्रसाहाय्येन च तज्ज्ञानमुपलब्धम् । अद्यत्वे कस्यापि रोग-

विशेषस्यौषधिविशेषस्यान्वेषणाय बहूनां निरीहाणाम्प्राणिनां निर्मम: संहारो वैज्ञानिकैः क्रियते । आर्यावर्तीयमहर्षयस्तु तान् रोगान् भेषजानि चान्तर्दृष्ट्या हिंसां विनैव साक्षात्कृतवन्त: ।

दर्शनद्वारा स्थापितसिद्धान्तानामेव परीक्षणम्, निष्कर्षणञ्च विज्ञानस्य वास्तविकं कार्यक्षेत्रमस्ति । दर्शनं हि सत्यान्वेषणस्य सूत्रमस्ति, विज्ञानञ्च तस्य व्याख्यानभूतम् । दर्शनमाधार:, विज्ञानञ्च तत्राधेयम् । दर्शनं रेखापथ:, विज्ञानञ्च यानस्य प्रतीकम् । पाश्चात्यदार्शनिकानां विचारैरप्यस्माकं मन्तव्यस्य पुष्टिर्भवति । शर्मण्यदेशीयो महान् दार्शनिकः हर्बर्ट-स्पेंसरमहोदयो ब्रूते:—

"Science is partially unified knowledge Philosophy is completely unified knowledge."

अर्थात् "विज्ञानं हि व्यष्टिभूतात्मकं ज्ञानमनुसन्धत्ते । दर्शनन्तु समष्टिभूतात्मकं ज्ञानं विवृणोति ।" विज्ञानेन ह्येकाङ्गिज्ञानमुत्पाद्यते । दर्शनेन च वयमशेषपदार्थान्पूर्णरूपेण ज्ञातुं शक्नुम: ।' महान् दार्शनिक: शोपेनहावरमहोदयस्तु दर्शनस्याभ्यर्हितत्वे प्रशस्तमाह—

"Philosophy begins where science ends. Science cannot proceed from the known to unknown, ... ... ... .. .... .... . ... ... .... ... .... ... ...Philosophy is most general relational knowledge, the first principle of which cannot be denied by other principles".

"यत्र विज्ञानस्य गतिरन्तमेति ततो दर्शनस्य प्रारम्भो भवति । न खलु विज्ञानं ज्ञातपदार्थाद्विज्ञातपदार्थं प्रति पदमपि गन्तुं शक्नोति । परन्तु दर्शनं हि समस्तस्याज्ञातपदार्थजातस्यानुसन्धाने समर्थमस्ति । दर्शनं हि श्रेष्ठं समन्वयात्मकं ज्ञानमस्ति । दर्शनं हि तन्मूलभूतसिद्धान्तोऽस्ति यस्य संसारेऽन्यशास्त्रीयसिद्धान्ता अपि विरोधं कर्तुं न सुशका: ।"

दर्शनं हि सामान्यरूपेण सर्वशास्त्रसमन्वयात्मकं ज्ञानमस्ति, यस्यैकमपि सिद्धान्तं नापाकर्तुं शक्नुवन्ति विज्ञानप्रमुखाणि शास्त्राणि ।

अनेनैव महाभागेनान्यत्र समुद्घोषितम् :—

"Philosophy is the sum-total of genera judgements of that which is to be found in human consiousness. Its taste is to state in the abstract the nature of the whole world and its parts."

अर्थात् "मानवज्ञानक्षेत्रे ये सिद्धान्तास्तेषां योगफलभूतो निर्णयात्मकसिद्धान्त एव दर्शनमस्ति । साङ्गोपाङ्गस्य जगतः प्रकृतेर्भावात्मकं विवरणमेव दर्शनस्य विषयीभूतं क्षेत्रम् ।"

( Consign's History of Philosophy )
Vol. I.

### दर्शनविज्ञानयोस्समन्वयः

दर्शनं ह्यात्मज्ञानं समाश्रितम् । अस्मिन्संसारे शान्तिस्थापनं दर्शनद्वारैव भवितुमर्हति । विज्ञानञ्च भौतिकवादमाश्रित्य प्रवर्तते । अतएव विज्ञानविस्तारेण हिंसासंघर्षविनाशसम्भावना सर्वदैव वर्तिष्यते । दर्शनमुपदिशति यत् प्राकृतिकं जीवनं यापनीयम्, परन्तु विज्ञानं जीवनस्यावश्यकतामुत्तरोत्तरं वर्द्धयति । आवश्यकताभिश्च प्रेरितो लोकः विविधभोगपदार्थानामुत्पादने प्रवर्तते । तैः पदार्थैश्च कामवासना प्रबुध्यते । कामवासना च क्रोधं जनयति । क्रोधाच्च सम्मोहो जायते । सम्मोहाच्च बुद्धिभ्रंशयति । बुद्धिभ्रंशाच्च विनाशो जायते । एवं हि वर्तमानविज्ञानस्य परिणामो विनाशः दर्शनस्य च परिणामः परमानन्दः प्रतिभाति ।

एवं सत्युभयोर्भेदे यदि दर्शनविज्ञानयोस्समन्वयः स्यात्तर्हि लोकस्य महानुपकारस्सम्भवेत् । धर्मश्च दर्शनविज्ञानयोस्समन्वयमेवाचष्टे । तदुक्तं कणादमुनिना वैशेषिकदर्शने :—

यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ।

अभ्युदयश्चैहलौकिकः, निश्श्रेयसश्च पारलौकिकः । अनयोः सिद्धिर्येन भवेत्सः धर्मः : विज्ञानेनैहलौकिकोऽभ्युदयो जायते, दर्शनेन च पारलौकिकोऽभ्युदयो निश्श्रेयसो वा जायते । तदुभयोः समन्वयेन धर्मो विजयत इति फलितम् । यस्माद्यानि राष्ट्राणि सम्प्रति दर्शनविज्ञानयोस्समन्वयङ्कृत्वा चलिष्यन्ति तान्येव जीवितानि स्थास्यन्तीति सम्यगनुभूयते । ये तु केवलं विज्ञानं दर्शनं वाश्रित्य प्रवर्तिष्यन्ते न तेषां समुद्धारः ।

अस्माकं देशस्तु सदैव दर्शनविज्ञानयोस्समन्वयङ्कुर्वन्नायाति । तथा च तैत्तिरीयाः समामनन्ति :—

विज्ञानं ब्रह्मेति व्याजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानाज्जातानि जीवन्ति । विज्ञानम्प्रयन्त्यभिसंविशन्ति ।

तत्परम्परायां वर्तमानयुगनिर्माता महर्षिदयानन्दसरस्वती दर्शनविज्ञानयोस्समन्वयङ्कुर्वाणः सायणोव्वटमहीधरादीनाम्पौरस्त्यानां मैक्समूलर-विलसन-ग्रिफिथ–ब्लूमफील्ड–राथ–वेबर – ग्रासमैन–प्रभृतीनाम्पाश्चात्यानामेकाङ्गीभूतं वेदभाष्यं तिरस्कृत्य किमपि नूतनन्दर्शनविज्ञानसमन्वयात्मकं वेदभाष्यमाविश्चकार । दर्शनस्य सत्यपि प्राधान्ये नास्माकं देशे विज्ञानस्य तिरस्कारः, विज्ञानस्य वेदमूलकत्वात् । वेदोहि चतुष्काण्डात्मकः. ज्ञानकर्मोपासनाविज्ञानकाण्डभेदात् । तत्र ज्ञानकाण्डमयः ऋग्वेदः, कर्मकाण्डमयो यजुर्वेदः, उपासनाकाण्डमयः सामवेदः, विज्ञानकाण्डमयश्चाथर्ववेदः । विज्ञानेन समन्वितं दर्शनं लोकानुग्रहाय कल्पते । अस्माकं देशस्य प्रथमः राष्ट्रपतिः डा० राजेन्द्रप्रसादः भारतीयसंस्कृतेः दर्शनविज्ञानसमन्वस्य च महान् व्याख्यातासीत् । अस्माकं द्वितीयः राष्ट्रपतिः डा० सर्वपल्ली-राधाकृष्णन्-महोदय पंचाशद्भिः वर्षे भारतस्य ऋषीणां मुनीनाञ्च दर्शनविज्ञानसमन्वितान् सन्देशान् समस्तसंसारे प्रचारयाञ्चक्रे । भारतीयसंस्कृतेः सन्देशवाहकोऽस्माकं भूतपूर्वः प्रधानमन्त्री पं० जवाहरलालनेहरू-महोदयोऽपि निरन्तरं दर्शन

विज्ञानयोस्समन्वयं प्रख्यापयन् समस्तभूमण्डले शान्तिप्रतिष्ठापनायात्मनस्सर्वस्वमप्यहौषीत् । तदिदं स्पष्टं यद्दर्शनानुमोदित विज्ञानं विज्ञानानुमोदितञ्च दर्शनमेव लोककल्याणकरमिति । तदुभयोस्समन्वयमाश्रित्यैव प्रवर्त्तितव्यमस्माभिः । एष एवार्षो वैदिकश्च निर्भ्रान्तः पन्थाः लोकाभ्युदयःनिःश्रेयसकरः । वेदेषु दर्शनमूलकानि विज्ञानमूलकानि च तथ्यानि सममेव बहुलं समाम्नातानि ।

# धर्मस्वरतो गानस्वराणामुद्भवः

डॉ० सत्यदेवमिश्रः

विश्ववाङ्मये मन्त्रब्राह्मणात्मकं[1] विशालं वैदिकवाङ्मयं महत्त्वपूर्णमस्ति। तस्यार्थावगमायार्थज्ञापकेषु[2] स्वराणां विशिष्टास्पदमिति सर्वविदितो राद्धान्तोऽस्ति। स्वरैः प्रणीतार्थाः स्फुटा भवन्तीति नात्र सन्देहावकाशः[3]।

तत्र स्वरव्यवस्थानियामिके द्वे स्वरप्रक्रिये स्तः—प्रथमा धर्मस्वरप्रक्रिया, अपरा गानस्वरप्रक्रियेति। धर्मस्वरप्रक्रियायां मन्त्रब्राह्मणयोः स्वराणां संख्यामुद्दिश्य बहुशो मतवादिनां मतवादाः दरीदृश्यन्ते। नामतोऽत्र तेषां निर्देशोऽवचीयते—

(१) एकस्वरः—ऐतरेयादिब्राह्मणग्रन्थेषु एकस्वर एव दृश्यते, यस्यापरनाम तान एकश्रुतिर्वा[4]।

---

१. मन्त्रब्राह्मणयोर्वेदनामधेयम्। (आपस्तम्बपरिभाषा १।३३)।

२. संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिंगं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ (वाक्यपदीय २।३१७।)।

३. अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित्।
एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा इति॥ (स्वरानुक्रमणी १।८)।

४. तानोऽन्येषां ब्राह्मणस्वरः। (भाषिकसूत्रम् ।३।२८)।

२—द्वौ स्वरौ :—माध्यन्दिनकाण्वशतपथताण्ड्यभाल्लवि[1]ब्राह्मणग्रन्थेषु उदात्तानुदात्तयोः द्वयोः स्वरयोः प्रयोगो दृश्यते ।[2]

३—त्रयः स्वराः —सामगानव्यतिरिक्तानां विविधशाखाविभक्तानां चतुर्णां वेदानां मन्त्रभागेषु तथा कृष्णयजुर्वेदीयमन्त्रब्राह्मणोभयभागेषु च त्रयः स्वराः प्रयुक्ताः सन्ति, ते यथा उदात्तोऽनुदात्तः स्वरितश्चेति ।[3] प्रातिशाख्यैः समं पाणिनीमतसम्मतमप्येतन्मतम् ।[4]

४—चत्वारः स्वराः—तैत्तिरीयप्रातिशाख्यानुसारं चत्वारः स्वराः वर्तन्ते, उदात्तश्चानुदात्तश्च स्वरितश्चेति तथा[5] । एते स्वरा अपि मन्त्रे सुप्रयुक्ता सन्ति ।

५—पंचस्वराः —नारदशिक्षायां उदात्तादिस्वराणां संख्या पंच वर्णिता विद्यते यथा—उदात्तः, अनुदात्तः, स्वरितः, प्रचयः, निघातश्चेति ।[6]

६—सप्तस्वराः —महाभाष्यकारेण पतञ्जलिना उदात्तादिस्वराणां संख्या सप्त निर्दिष्टा अस्ति । उदात्तः, उदात्ततरः, अनुदात्तः, अनुदात्ततरः, स्वरितः, स्वरितगतोदात्तो एकश्रुतिश्चेति ।[7]

एवं बहुमतबहुलासु स्वरसंख्यासु प्रकृत्या परिनिष्ठितसंख्यावधारणाय परामृश्यतेऽत्र । इह ये स्वराः नाम्ना निर्दिष्टास्तेषु उदात्तोऽनुदात्तः स्वरितश्चेति

---

१. शतपथवत्ताण्डिभाल्लविनां ब्राह्मणस्वरः । ( भा० सू० ३।१५ ) ।

२. ( क ) द्वौ । भा० सू० १।२ । ( ख ) वा० प्रा० १।१२६ ।

३. ( क ) उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः ( ऋ० प्रा० ३।१ ) ।
( ख ) उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ( पा० शि० । १ ) ।
( ग ) १—उच्चैरुदात्तः, २—नीचैरनुदात्तः, ३—समाहारः स्वरितः ( अष्टा० १।२।२९ )

४. ( क ) तै० प्रा० २१।१८—२० ।
( ख ) तेषां खाण्डिकेयोखेयानां चातुःस्वर्यमपि क्वचित् । ( भा० सू० ३।१६ )

५. ना० शि० १।७।१९ ।

६. महा० ।१।२।३३ ।

७. सप्त साम्नाम् ( भा० सू० ३।१९ । ) ।

त्रय एव प्रकृत्या मुख्यस्वराः अन्येषां स्वराणामेष्वेवान्तर्भावः, यथा—उदात्तप्रकृतयः उदात्तोदात्ततरस्वरितगतोदात्तांशैकश्रुतिस्वराः, अनुदात्तप्रकृती अनुदात्तानुदात्ततरौ स्वरौ, स्वरितप्रकृतिः स्वरितः। एषु प्रचयः एकश्रुतेः, निघातोऽनुदात्तस्य च पर्यायः। इत्थं उदात्तादीनां त्रैविध्यमेव मुख्यम्, अन्ये स्वराः एतेषामेव भेदोपभेदाः। इदं त्रैविध्यमङ्गीकृत्यैवोदात्तादीनां त्रैस्वर्यप्रक्रिया प्रवृत्ता भवति।

धर्मस्वरतो भिन्ना एव गानस्वरप्रक्रिया अस्ति। गानस्वराणां प्रयोगः वैदिकवाङ्मये सामगाने क्रियते। एषां संख्या सप्त विद्यते।[1] तैत्तिरीयप्रातिशाख्ये एषां नामानि निर्दिष्टानि। तानि यथा—कुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याः।[2] अर्वाचीनगानप्रक्रियायामेषां नामानि सन्ति—षड्जऋषभगान्धारमध्यमपंचमधैवतनिषादा इति।[3]

नारद उभयोः तारतम्यं विनिर्दिशन्नाह-सामगानां प्रथमः (क्रुष्टः) स्वरः वेणोर्मध्यमस्वरो भवति, द्वितीयः (प्रथमः) स्वरः गान्धारस्वरो भवति, तृतीयः (द्वितीयः) स्वरः ऋषभस्वरो भवति, चतुर्थः (तृतीयः) स्वरः षड्जस्वरो भवति, पंचमः (चतुर्थः) स्वरः धैवतस्वरो भवति, षष्ठः (मन्द्रः) स्वर निषादस्वरो भवति तथा सप्तमः (अतिस्वार्यः) स्वरः पंचमस्वरो भवतीति।[4]

अत्रावधेयं धर्मस्वरतो भिन्नाऽपि गानस्वरप्रक्रिया धर्मस्वरत एव उद्भूतेति विमतं मतम्। अत्र प्रमाणभूतस्तत्र भगवान् पाणिनिः—

उदात्ते निषादगान्धारा-
अनुदात्ते ऋषभधैवतौ।
स्वरितप्रभवा ह्येते
षड्जमध्यमपंचमाः॥[5]

१. तै० प्रा० २३।१२।
२. (क) भा० सू० ।३।१६। (ख) पिंगलसूत्र ।३।६४।
३. ना० शि० ।१।८।१,२।
४. पा० शि० ।१२।

अर्थादुदात्तान्निषादगान्धारयोः अनुदात्तादृषभधैवतयोस्तथा स्वरितात् षड्जमध्यमपंचमस्वराणामुत्पत्तिर्भवति । एवं क्रमेणैव ऋचाम् ऋग्योनिसामरूपेण परिणतिर्भवति । रेखाचित्रेणेदमेवं प्रस्तोतुं शक्यत इति ।[1]

स्वर

| | | | | | | |
|---|---|---|---|---|---|---|
| स्वरितः | उदात्तः | अनुदात्तः | स्वरितः | अनुदात्तः | उदात्तः | स्वरितः |
| क्रुष्टः | प्रथमः | द्वितीयः | तृतीयः | चतुर्थः | मन्द्रः | अतिस्वार्यः |
| मध्यमः | गान्धारः | ऋषभः | षड्जः | धैवतः | निषादः | पञ्चमः |
| म | ग | रे | सा | ध | नि | प |

१. पाणिनीयस्वरप्रक्रिया—समीक्षात्मक अध्ययन ।

# भगवतो बुद्धस्य मध्यममार्गः

श्रीलक्ष्मणत्रिवेदी

करुणापरतन्त्रो भगवांस्तथागतो भवरोगिभ्य औषधसन्निभमिमं मध्यममार्गम् आविश्चकार। जगदिदं यथा नैकविधैर्दार्शनिकवादैर्ध्वान्तैरिव घोरैराच्छादितमासीत् तदासौ भगवान् स्वमध्यममार्गदेशनाभिरेव तच्चक्षुष्मदकार्षीत्। लोकोऽयं यदा द्विषष्टिसंख्यैरुच्छेदवाद–शाश्वतवाद–अकृततावाद–दैववाद–अनिश्चिततावादिभिराकुलो दिङ्मूढ इवासीत्तदा भुवि अनिबन्धनबन्धोर्भगवत्तथागतस्य मुखाम्बुजान्मध्यममार्गोऽयं निश्चक्राम। ध्वान्तं ध्वस्तम्, ज्ञानादित्यो जगन्नभसि समुदियाय, उद्धृतेरध्वा च लब्धो लोकैः। "सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा"। —कालिदासः

विषबाणैर्विद्धो यथा कश्चित् विचारमूढो जनस्तदानीं स्वरोगमुक्तिम् उपेक्ष्य तं विषदरोगान्मोचयितुमागतं विषवैद्यराजं प्रति केन मयि विषबाणः क्षिप्तः? का तस्य जातिः? कीदृशं तस्य रूपम्? कीदृशस्तस्य वर्णः? गौरोऽसौ श्यामो वेति प्रश्नमालाम् अर्पयितुं प्रस्तौति, तथैव लोकोऽयं भवरोगपीडितोऽस्ति, जातिजरा-मरणादिभिर्नानाविधैः क्लेशैराक्रान्तोऽस्ति, तथापि कोऽयम् आत्मा? नित्योऽयम्? अनित्यो वा? लोकोऽयं सान्तः? अनन्तो वा? इत्यादिप्रश्नावलीं स्वजीवनाय व्यर्थामेव विदधातीत्यवधार्य भगवत्तथागतोऽत्राणाय लोकाय, अशरण्याय लोकाय, भवरोगात् त्राणमेव प्रकामं प्रियं निश्चिकाय। अतस्तल्लोकमङ्गलदृशैव "बहुजनहिताय बहुजनसुखाय" इति मनीषयैव भगवान् इमं मध्यममार्गम् उपादिक्षत्। अत एवाह शान्तरक्षितः स्वतत्त्वसंग्रहे—

> यथा यथा च मौर्ख्यादिदोषदुष्टो भवेज्जनः।
> तथा तथैव नाथानां दया तेषु प्रवर्तते॥

मध्यममार्गोऽयं शाश्वतदृष्टिम् उच्छेददृष्टिञ्च परिवर्ज्य तन्मध्ये विद्यते। आत्मदृष्टिरेव शाश्वतदृष्टिः। भगवता तथागतेनात्मनः सत्त्वं परमार्थतो न स्वीकृतम्। आत्मानुभविता, अनुभवविषयः, नित्यः, ध्रुवः, शाश्वतः अपरिवर्तनशीलश्चेति तैर्थिकानां सिद्धान्तं साभिनिवेशं खण्डितवान् भगवत्तथागतः। "अय भिक्खवे केवलो परिपूरो बालधम्मो"। बौद्धराद्धान्ते सर्वेषामप्यनर्थानां मूलमात्माङ्गीकरणमेव। आत्मैव सर्वविधरागाणां केन्द्रम्। आत्मन एव सर्वेऽपि कामाः उद्यन्ति। आचार्यधर्मकीर्तिरात्मनो विषये एवमुदाजहार—यः आत्मानं पश्यति, तस्यैवात्मनि सदा स्नेहो वर्द्धते, स्नेहेन तत्सुखार्थं तृष्णोत्पद्यते, तृष्णा दोषानाच्छादयति। गुणदर्शी पुरुषः "विषया अस्मदीयाः" इति मत्वा विषयसाधनानि गृह्णाति।

इत्थं तृष्णातः उपादानम् उत्पद्यते। अतः सर्वेषामपि दोषाणाम् उत्पत्तिकारणमात्मदृष्टिरथवा शाश्वतदृष्टिरेव। यथोक्तं प्रमाणवार्तिके—

यः पश्यत्यात्मानं तस्याहमिति शाश्वतः स्नेहः।
स्नेहात् गुणेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते॥
गुणदर्शी परितृष्यन् ममेति तत् साधनमुपादत्ते।
तेनात्माभिनिवेशो यावत् तावत् संसारः॥
आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ।
अनयोः संप्रतिबन्धात् सर्वे दोषाः प्रजायन्ते॥

आर्यरत्नकूटेऽप्युक्तम्—आत्मेति काश्यप अयमेकोऽन्तः। नैरात्म्यम् इत्ययं द्वितीयोऽन्तः। यदेतदनयोरन्तयोर्मध्यं तदरूप्यम् अनिदर्शनम् अप्रतिष्ठम्, अनाभासम्, अविज्ञप्तिकम्, अनिकेतनम्। इयमुच्यते काश्यप मध्यमा प्रतिपद् धर्माणां भूतप्रत्यवेक्षा इति॥

सूत्रबद्धा विहङ्गमा इव आत्मसूत्रबद्धाः प्राणिनस्त्रैधातुकभवोपपत्तिम् अतिवाह्य शिवम् अजरम् अमरणम् निर्वाणपुरम् अभिगन्तुम् नैव समर्थाः भवन्ति। अतो निर्वाणाभिलाषोत्पादनार्थम् आत्मनोऽनङ्गीकरणं कृतं तथागतेन।

इमाम् आत्मदृष्टिं परिवर्ज्य मध्यममार्गः आश्रय इति भगवद्देशना।

उपरि वर्णिता आत्मदृष्टिर्यथा न श्रेयस्करी तथैवोच्छेददृष्टिरपि। उच्छेद-दृष्ट्या स्वार्थोपहताः मानवाः येन केनापि प्रकारेण स्वजीवनं सुखमयं कर्त्तुं चेष्टन्ते, तेषां मतं यत्—यावज्जीवेत् तावत् सुखं जीवेत्, पुनरागमनं नैव सम्भवम्। एतादृशी दृष्टिरेव "विभवतृष्णा" कथ्यते। विभवशब्दोऽत्रोच्छेदवाचकः। संसारनाश इत्यर्थः। संसारनाशेच्छाऽपि तथैव दुःखदायिनी यथा तच्छाश्वतेच्छा। शरीरमिदं पृथिवीजलतेजोवायुभिश्चतुभिर्महाभूतैर्निर्मितम्। मृत्योरनन्तरम् एतानि सर्वाण्यपि भूतानि स्वस्वमूलतत्त्वेऽवलीनानि भवन्ति। न किञ्चिदवशिष्यते। मृत्योरनन्तरं न काचिदात्मसन्ततिः परलोको वा, पापपुण्ययोः न किञ्चित् फलम्। एवम्—नास्त्ययं लोकः, नास्ति परलोकः नास्ति सुकृतदुष्कृतकर्मणां फलविपाकः, नास्ति सत्त्व उपपादुक इति। उच्छेददृष्टिरियम् असद्दृष्टिरेव। "एते उच्छेददृष्टयः स्वर्गापवर्गविशिष्टेष्टफलविशेषाक्षेपपराङ्मुखाः सतत-समितम् अकुशलकर्माभिसंस्करणप्रवृत्ताः नरकादिमहाप्रपातनपतनाभिमुखाः भवन्ति" इति चन्द्रकीर्त्तिः। चार्वाकदृष्टिरेवोच्छेददृष्टिः। यथोक्तं साकल्येन सर्वदर्शनसंग्रहे—

अङ्गनालिङ्गनाज्जन्यसुखमेव पुमर्थता।
कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते॥
यदि गच्छेत् परं लोकं देहादेष विनिर्गतः।
कस्माद् भूयो न चाऽऽयाति बन्धुस्नेहसमाकुलः॥
अग्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः।
केनेदं चित्रितं तस्मात् स्वभावात् तद्व्यवस्थितिः॥
यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥

एतद्दृष्टिद्वयमपि पतनगर्त्ततुल्यं निर्वाणपराङ्मुखञ्च निर्धार्यं धर्मचक्र-प्रवर्तनसूत्रे भिक्षूनुद्दिश्यैवमवोचत् भगवान्—"द्वेमे भिक्खवे—अन्ता पब्बजितेन न सेवितब्बा। कतमे द्वे? यो चायं कामे कामसुखल्लिकानुयोगो हीनो गम्मो पोथुज्जनिको अनरियो अनत्थसंहितो। यो चायं अत्तकिलमथानुयोगो दुक्खो

अनरियो अनत्थसंहितो। एते खो भिक्खवे उभो अन्ते अनुपगम्म मज्झिमा पटिपदा तथागतेन अभिसम्बुद्धा चक्खुकरणी ञाणकरणी उपसमाय अभिञ्ञाय सम्बोधाय निब्बाणाय संवत्तति"।

अर्थात् हे भिक्षवः। संसारं परित्यज्य निवृत्तिमार्गेण गच्छता जनेन अन्तद्वयमपि नैव सेवितव्यम्। अन्तद्वयञ्चेदं यत्—काम्यवस्तुषु भोगेच्छया सदासक्तिः प्रथमोऽन्तः। विषयानुयोगोऽयं हीनः ग्राम्यः, आध्यात्मिकतायाः पृथक्कारी, अनार्योचितः अनर्थोत्पादयिता चास्ति। द्वितीयान्तश्चात्र शरीराय अतिकष्टदानम्, इदं कष्टदानमपि नार्योचितम्, हानिकरञ्च। एतदन्तद्वयस्य सेवनेन मानवाः न कदापि भवचक्रान्मुक्ताः भवितुमर्हन्ति। अतोऽन्तद्वयमेतत् परिवर्ज्यं मध्यममार्ग एवाश्रेयः। मार्गोऽयं चक्षुरुन्मीलयिता ज्ञानोत्पादयिता चास्ति। अयमेव मार्ग इचरो शान्तिम् उत्पादयति, सम्यग्ज्ञानं प्रदर्शयति, निर्वाणञ्च प्रापयति। अस्यैव सेवनं प्रत्येकं प्रव्रजिताय हितावहम्।

एवं सर्वत्र मध्यममार्गस्यास्य पौनःपुन्येन महत्त्वमुद्घोषितं दरीदृश्यते। वस्तुतो मध्यममार्गोऽयं, शीलेन, समाधिना प्रज्ञया च मानवेन स्वकुशलजीवनस्य सञ्चालनमेव। शीलन्तु पवित्रं चरित्रमेव भवति। सम्+आ+धिः = समाधिः, सम्यक् प्रकारेण चित्तस्य चञ्चलस्य निरोधनमेव। प्रज्ञा च सम्यग् ज्ञानम्। शील-समाधि-प्रज्ञा-बलेनैव मानवाः स्वजीवनमुद्धर्त्तुं क्षमन्ते।

मानवाः एतत्त्रयबलेन ईश्वरादिसाहाय्यनिरपेक्षेण भवारण्यं सुखेनोल्लङ्घ्य स्वजीवनसाफल्यश्रियं प्राप्तुं पारयन्ति, निर्वाणपुरं गन्तुं प्रभवन्ति च।

नात्र मार्गे ईश्वराद्यालम्बनात्मकं पारतन्त्र्यम्। नात्र मार्गेऽनर्थकारिणी आत्मदृष्टिः। अत एवायं मध्यममार्गोऽभिधीयते। शील-समाधि-प्रज्ञात्मकोऽयं मध्यममार्ग एवाष्टाङ्गिकमार्गरूपेण पल्लवितः पुष्पितश्च दृश्यते बौद्धशास्त्रे यथा १—सम्यक्दृष्टिः, २—सम्यग्सङ्कल्पः ३—सम्यग्वचनम् ४—सम्यक्कर्मान्तः ५—सम्यगाजीवः ६—सम्यग् व्यायामः ७—सम्यक् स्मृतिः ८—सम्यक् समाधिरिति।

सम्यग्दृष्टिः—दृष्टिशब्दोऽत्र ज्ञानार्थकः। सम्यग्ज्ञानमित्यर्थः। यो हि जनोऽकुशलम् अकुशलमूलञ्च जानाति स एव सम्यग्दृष्टिरुच्यते। दुःखस्य, दुःखसमुदायस्य, दुःखनिरोधस्य, दुःखनिरोधमार्गस्य चार्यसत्यचतुष्टयस्य ज्ञानमपि सम्यग्दृष्टिरेव।

सम्यक् सङ्कल्पः—सम्यक् निश्चय इत्यर्थः। निष्कामनायाः, अद्रोहस्य, अहिंसायाश्च निश्चय एव सम्यक् सङ्कल्पः कथ्यते।

सम्यग्वचनम्—सत्यवचनमित्यर्थः। असत्यस्य, पिशुनवचनस्य, परुषवचनस्य च परित्याग एव सम्यक् वचनम्। येन वचनेन नापरस्य हृदयम् आहतं भवति। यच्च परुषं वचनम्, येन च वचनेनापरो निन्द्यते, यच्च वचनम् अपार्थम्, प्रलापमात्रम्। एतादृशं वचनं न प्रयोक्तव्यम्। नैव वैरं परुषवचनैः शाम्यति, अवेरेणैव शाम्यति तत्। उक्तं यथा—

न हि वेरेन वेरानि सम्मन्तीध कुदाचन।
अवेरेन च सम्मन्ति एस धम्मो सनन्तनो॥

(धम्मपदम्, १।५)

सम्यक्कर्मान्तः—पञ्चानां कर्मणाम् अनुष्ठानं प्रत्येकं मनुष्याणामावश्यकम्। इमानि एव पञ्चकर्माणि पञ्चशीलशब्देनापि प्रोच्यन्ते। अहिंसा सत्यम् अस्तेयं ब्रह्मचर्यं सुरामैरेयादित्यागश्चेति पञ्चकर्माणि पञ्चशीलाभिधानानि। एतेषां कर्मणामनुष्ठानं सर्वेषां श्रेयस्करम्। एतत्पञ्चकर्मानुष्ठानमेव सम्यक्कर्मान्तोऽभिधीयते।

सम्यगाजीवः—विशुद्धा जीविकेत्यर्थः। अपरस्मै क्लेशमदत्वा हिंसाञ्चाकृत्वा कस्यचित् यः आजीवः स एव सम्यगाजीवः। शस्त्रादिव्यापारः, प्राणिविक्रयव्यापारः, मांसविक्रयव्यापारः, मद्यव्यापारः, विषव्यापारः, एते व्यापाराः एतादृशाश्चान्ये व्यापाराः सम्यगाजीवबाह्याः।

सम्यग्व्यायामः—शोभनोद्योग इत्यर्थ। इन्द्रियाणां संयमो वा। दूषित-

भावनानां निरोधस्य शुद्धभावनानाञ्चोत्पादनस्य च प्रयत्नः, उत्पन्नानां शुद्ध-भावनानाञ्च रक्षणोपाय एव सम्यग्व्यायामः कथ्यते ।

सम्यक् स्मृतिः—कायस्य, वेदनायाः, चित्तस्य धर्मस्य च पारमार्थिक-स्वरूपज्ञानम् । सदा तत्स्मृतिश्च सम्यक्स्मृतिरुच्यते । स्मृतिप्रस्थानानि चत्वारि भवन्ति—(१) कायानुपश्यना (२) वेदनानुपश्यना (३) चित्तानुपश्यना (४) धर्मानुपश्यना च । कायोऽयं मलमूत्रकेशनखादीनां समुच्चयमात्रमेव । यो जनः कायमेवं पश्यति सः "काये कायानुपश्यी" इत्युच्यते ।

वेदनास्तिस्रो भवन्ति—सुखम्, दुःखम्, न सुखम् न दुःखञ्च ।

यो वेदनायाः एतादृशं स्वरूपं जानाति स एव 'वेदनायां वेदनानुपश्यी' उच्यते । चित्तं नानावस्थं भवति—कदाचित् तत् सरागम्, कदाचित् विगतरागम्, कदाचित् सद्वेषम्, कदाचित् द्वेषरहितम्, कदाचित् समोहम्, कदाचित् वीतमोहञ्च । चित्त-स्यैताः अवस्थाः तासु स्वचित्तगतिञ्च यो जानाति स एव "चित्ते चित्तानुपश्यी" ।

धर्मोऽपि नानाविधः—(१) कामुकता (२) व्यापादः (३) शरीरस्य मनसश्चालस्यम् (४) विचिकित्सा (५) उद्वेगः खेदश्चेत्यादिकः । एतद्-धर्मप्रकारं यो जानाति स एव "धर्मे धर्मानुपश्यी" ।

सम्यक्समाधिः—यद्बलेन चित्तस्य कायस्य च शुद्धिः क्रियते स एव सम्यक्-समाधिः । ज्ञानमावश्यकम् । तस्य शुद्धिश्चावश्यकी । ज्ञानशुद्धये प्राक् चित्तस्य कायस्य च शुद्धिरपेक्ष्यते । सा शुद्धिः सम्यक्समाधिनैव कर्त्तुं शक्यते ।

एवमिमानि अष्टौ अपि अङ्गानि शीलस्य समाधेः प्रज्ञायाः पल्लवितरूपाण्येव । 'प्रज्ञायाः पल्लवितं रूपम् सम्यक्दृष्टिः, सम्यक्सङ्कल्पः शीलस्य रूपान्तरम्—सम्यक्कर्मान्तः, सम्यग्वचनम्, सम्यगाजीविकेति ।

समाधेः रूपान्तरम्—सम्यग्व्यायामः सम्यक्स्मृतिः, सम्यक्समाधिश्चेति ।

इत्थं शाश्वतदृष्टि–उच्छेददृष्टिपरिहारेण बौद्धानां दर्शनं मध्यममार्गदर्शन-मभिधीयते । भोगेच्छायाः कष्टेच्छायाश्च परिहारेण बौद्धजीवनं मध्यममार्गानुरोधि-

जीवनं कथ्यते। एतन्मध्यममार्गानुरोधेन बौद्धदर्शने प्रतीत्यसमुत्पादादीनि विभिन्नानि मतानि प्रादुर्भूतानि। अयमेव मध्यममार्गः आचार्यनागार्जुनेन शून्यतारूपेण प्रत्यपादि। उक्तं यथा माध्यमिककारिकायाम्—

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे।
सा प्रज्ञप्तिरुपादाय प्रतिपत् सैव मध्यमा॥

मध्यममार्ग एवायं शून्यता, उपादाय प्रज्ञप्तिः, मध्यमा प्रतिपत् शब्दैरप्यभिधीयते सौगतशासने।

एवमयं मध्यममार्ग एकं नेत्राभ्यञ्जनं विमलम्। एको मार्गः कुशकण्टकप्रस्तरादिरहितः। एको दीपो नानाविधदार्शनिकवात्याभिरप्रभावितः, अप्रकम्प्यश्च। एकमात्मावलम्बनम् ईश्वरादिदास्यदोषविडम्बनाविरहितम्। एकं परोपकारपरायणपरं व्यष्टिदोषापहारकम् औषधम्।

अत एव "मध्यमया धर्मं देशयति" इति शास्त्रोक्तिरपि सङ्गच्छते।

# संस्कृते साभिप्राया नारीपर्यायाः

श्रीशिवदत्तशर्मा चतुर्वेदी

संस्कृतकोशेषु शताधिकाः शब्दाः नारीपर्यायत्वेन प्रयुक्ता दृश्यन्ते। सर्वेऽपीमे शब्दाः स्वस्वरूपेऽभिव्यंञ्जना–भेदं धारयन्ति। तत्र सन्ति जातिवचना बहवः शब्दाः, अन्ये तद्गुणसंकेतकाः, केचिदङ्गमाधुरीसमर्पकाः, इतरे कार्य-सूचकाः, परे दोषोद्घाटका अपि। नारीस्त्रीललनाकान्ताप्रभृतयः जातिवचनाः शब्दाः। नारीशब्दो नरसम्बन्धं द्योतयति। स्त्रीशब्दस्य — "स्त्यायेते शुक्रशोणितावस्याम्" इति व्युत्पत्तिलभ्योऽर्थः। "महसः उत्सवस्य इला भूमिः". इति महिलाशब्दे व्युत्पाद्यमाने उत्सवानां केन्द्रभूतत्वं नार्या द्योत्यते। कान्त्यर्थकात् 'कमु'धात्तोर्व्युत्पद्यते 'कान्ता'शब्दः, तेन तस्यां द्युतिशालिनीत्वं समर्प्यते। 'लल' ईप्सायामिति धातोर्व्युत्पन्नेन 'ललना'शब्देन जनानामभिलाषकेन्द्रत्वं नारीणां बोत्यते। सप्तशत्यां स्मर्यते —

> सौभाग्यादि च यत्किञ्चिद् दृश्यते ललनाजने।
> तत्सर्वं त्वत्प्रसादेन तेन जाप्यमिदं शुभम्॥

सोऽयं स्त्रीसामान्यवाचकोऽपि 'ललना'शब्दस्तासामभिलाषपरिचायको-ऽपि संपद्यते। सौन्दर्योद्भासिता नारी 'कान्ता' शब्देनावेद्यते। प्रकाशार्थकात् कनुधातोर्निष्पद्यतेऽयम्। यद्यपि 'जननी' 'भगिनी' शब्दो स्त्री–सामान्यवाचको न भवितुमर्हतः, परन्त्वार्यसभ्यताऽस्मदीया एताभ्यां तां भूमिकां भावनापूर्णां प्रयच्छति यत्रैतौ शब्दो तादृशाश्चान्ये शब्दाः स्त्रीसामान्यवचना एव सम्पद्यन्ते। कोऽपि तावदार्यः नारीसामान्यं मातृभगिन्यादिभावेनावलोकयति, ऋते व्यक्तिगतसंकोचात्।

"अबला"शब्दः स्त्रीषु बलाल्पतां प्रख्यापयति। विषयेऽस्मिन्सा हि संरक्षणीया भवति, तस्यां विद्यते कोमलता। केचिद् व्याख्यातारः शब्दास्यास्य व्युत्पत्तिमिमां स्वीयारुचिकुक्षौ निक्षिप्य विपरीतं मतमुदघोषयन् यत् यत्रैकतो नारीणां कोमलता प्रकाशते तत्रैवापरत्र निरतिशयं बलमपि तासां तिरोहितं नास्ति। भगवत्या दुर्गायाः पराक्रमपरिपूर्णचरित्रपाठेन सहस्रशो जना अद्याप्यात्मानं पावयन्ति, प्रेरणां चासादयन्ति। स्वातन्त्र्ययुद्धे झांसी-राज्ञीसदृशीनां पराक्रमविचारानन्तरमबलाशब्दस्य नूनं व्युत्पत्यन्तरमालोच-नीयम्। तच्च नास्ति दुर्लभम्, तथाहि—"नास्ति बलं यस्याः समानमन्यत्रेत्यबला" इत्यपि तत्र विद्यत एव व्युत्पत्तिलभ्योऽर्थः। "योषा"शब्दस्तस्या प्रेमपूर्ण-सेवातत्परतां प्रकाशयति।

स्त्रीप्रकृतौ वैशिष्ट्यचतुष्टये रसिका मुग्धा भवन्ति। मृदुत्वम्, तनुत्वम् (कृशता), वैक्लव्यम् (अल्पपरिश्रमे श्रान्तिः), सौन्दर्यं च तद्वैशिष्ट्य-चतुष्टयम्। तत्र मृदुत्वं तनुत्वं च नारीशरीरेण संबद्धं जायेते। यस्या अंगानि नितान्तं प्रशस्तानि सा "अंगना" शब्देनोच्यते। "नितम्बिनी" इत्यपि तस्या एकं नाम विद्यते यद्धि तस्या विशेषांगस्य नितम्बस्य सौन्दर्यं प्रख्यापयति। 'करभोरु' पदेन तस्या ऊरुप्रदेशः गजशुण्डवत्कठोर इत्यादि सूच्यते। रघुवंशे रामः सीतां सम्बोधयति—

"कुरुष्व तावत् करभोरु पश्चान्मार्गे मृगप्रेक्षिणि दृष्टिपातम्।"

कालिदासेनात्र "करभोरु", "मृगप्रेक्षिणि", इति सम्बोधनद्वयस्य युगपत् प्रयोगोऽनुष्ठितः, तत्र द्वितीयं सम्बोधनं नेत्रसौन्दर्यं प्रकाशयति। "वामलोचना" शब्दस्यापि नेत्रसौन्दर्यशालिनीत्येव तात्पर्यम्, 'वामः कामो लोचने यस्या' इत्यपि व्युत्पत्त्यन्तरमेतस्य विलोक्यते। मोहिका आकर्षणशीला चेति सा 'कान्ता' विद्यते। कामप्राबल्यात् कामनीति तस्याः संज्ञा। कृशगात्रयुक्तत्वात् सा 'तन्वी' भवति। मदप्रकर्षात् पुनः 'प्रमदा' सा। सर्वेषां सम्मानकरणात्, मानापमानयोरधिकं विचारकरणाच्च सा 'मानिनी" कथिता। भयाधिक्यात् "भीरुः" सा, वमति स्नेहमिति सा वामा, अपांगेन विलोकनात् सा

प्रतीपदर्शिनीति कथ्यते। अल्पप्रज्ञत्वात् विपरीततत्त्वबोधनेनापि सा प्रतीपदर्शिनी यत्र तत्र कथ्यते। विवाहमाध्यमेन पुरुषेण गृहीतत्वात् सा 'वधू'र्भवति। तस्या: केशविन्यासे सीमन्तस्थानसौन्दर्यात् सा सीमन्तिनीति वर्ण्यते। तस्या सर्वपरिचितं नामास्ति सुन्दरीति। शब्दोऽयमुन्दी क्लेदने इति धातोर्विनिष्पन्न:। शब्दस्यास्य सार्थकत्व तदा भवति यदा नारीसौन्दर्यं दर्शकस्य हृदयाकर्षणं विदधीत। दर्शकस्य सहृदयस्याभावे निष्प्रयोजनमेव भवति सौन्दर्यम्। कालिदास: कुमारसंभवे पार्वतीविषये व्याहरति—

"निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता"।

चारुता सौन्दर्यं वा तदैव साफल्यं विन्दति यदा तेन माध्यमेन प्रियस्याकर्षणं जायेत। यस्या मादकता प्रतिक्षणं वर्धते सा "मत्तकाशिनी" त्युच्यते। स्वाभाविकीं नारीस्वरूपे संस्थितां मादकतां प्रकाशयति शब्दोऽयम्। यस्या वर्णे भवत्याकर्षणं सा "वरवर्णिनी" व्याह्रियते। एकत्र पद्ये शब्दस्यास्यार्थस्फोरणे- वैलक्षण्यं प्रतीयते, यथा—

"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला।
भर्तृभक्ता च या नारी सा भवेद्वरवर्णिनी"।

कुटुम्बस्य सर्वविधभारोद्वहनात् सा "कुटुम्बिनी" कथ्यते। कविभि: "पुरन्ध्री"शब्दोऽपि बाहुल्येन प्रयुक्त:। अत्रेदमपि द्रष्टव्यम्. यत् संस्कृतकाव्यग्रन्थेषु प्रसङ्गोत्थापनपुरस्सरं पुरसुन्दरीणां वर्णनमवश्यं दृश्यते। नगरस्य तस्य वर्णनं तावदपूर्णमेव तिष्ठति यावत् तत्रत्या: सुन्दर्यो न वर्णिता:। सोऽय पुरन्ध्रीशब्दस्तादृशीमेव कामप्यभिव्यञ्जनां धारयति। या पुरं धारयति, यां विना नगरं श्रीहीनमिव जायते। पुरस्य तदैव पुरत्वं यदा तत्र विद्यते सुन्दरीणां स्थिति: पुरातननगरसभ्यतायां स्त्रीणां कियानासीदादर इति द्योतनाय पर्याप्तोऽयं 'पुरन्ध्री'शब्द:। एकस्मिन्नेव दयिते नित्यमनुरक्ता 'सती', "पतिव्रता" इत्येवमादिभि: शब्दैर्घोष्यते। क्रीडारसपूर्णायामवस्थायां स्थिता सा 'कुमारी'त्युच्यते। कुत्सित: मारोऽस्यामिति

अर्धविकसितः कामस्तत्र द्योत्यते। 'आली' 'सखी' 'वयस्ये'त्यादयो मैत्री-बोधकाश्शब्दाः। 'रमणी''रामा'शब्दौ तस्याः कामक्रीडानैपुण्यं बोधयतः, क्रीडार्थकाद् रमुधातोर्निष्पन्नत्वात्तयोः।

एवमेवान्येऽपि सन्ति पर्याया येषु या कापि व्यञ्जनाऽवश्यं जागर्ति, यज्ज्ञानं विना कविहृदयस्थितानां स्फुरणानामानन्दः प्राप्तुं न पार्यते सहृदयैः।

# मीमांसकसम्मता वाक्यार्थ-विचार-सरणिः

डॉ० गजाननशास्त्री मुसलगाँवकरः

श्रीमज्जैमिनिमुनिप्रणीता द्वादशाध्यायी खलु मीमांसेति सर्वविदितमेव। तत्र प्रथमेऽध्याये धर्मप्रमाणानि विचारितानि। अतः स प्रमाणाध्याय इत्यप्युच्यते। द्वितीयाध्याये धर्माणां परस्परं भेदो निरूपितः। अतः स कर्मभेदाध्याय इत्युच्यते। इममध्यायमधिकृत्यैव तत्रत्यां विचारसरणिं किंचिदिव प्रदर्शयामः।

तत्र 'अग्निहोत्रं जुहुयात् स्वर्गकामः[1]', 'ज्योतिष्टोमेन स्वर्गकामो यजेत[2]', 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत[3]', 'विश्वजिता स्वर्गकामो यजेते[4]' त्यादिषु बहुषु वाक्येषु किमेक एव स्वर्गोऽवगम्यते उत भिन्न इति निर्णयो हि साधनभेदेन साध्यभेदस्य आवश्यकत्वात् साधनानां परस्परं भेदसिद्धयधीन एव भवति। साधनानां परस्परं भेदो हि नामधेयभेदेन, धातुभेदेन, गुणभेदेन, संख्यया, अभ्यासेन प्रकरणान्तरेण वा भवतीति निरूप्यते। तदुपोद्घाततया च प्रथमं धात्वर्थ एव भावनायां फलसाधनत्वेन अन्वेतीति निरूपणमावश्यकम्। तन्निरूपणं च 'सोमेन यजेत[5]' इत्यादिषु उपपदार्थः सोमो वा धात्वर्थो वा एक एव फलसाधनमिति निर्णयाधीनम्।

तदर्थं च प्रतिपदाधिकरणे[6] उपपदार्थः धात्वर्थश्च भावनायामुभयं प्रत्येकं

---

१. जै० न्या० मा० १।१। वाक्याधिकरणे।
२. ,, ,, ३।३। ज्योतिष्टोमस्य याजुर्वेदिकताधिकरणे।
३. ,, ,, २।१ भावार्थाधिकरणे।
४. तां० म० ब्रा० १६।४।५
५. तै० सं० ३।२।२
६. मीमांसादर्श० २।१।१ प्र० वर्णकम्।

करणम् । तथा च सोमोऽपि स्वर्गसाधनं यागोऽपि स्वर्गसाधनमिति पूर्वपक्षस्य अनेकाऽदृष्टकल्पनाप्रसङ्गादेकमेव फलकरणम्, अन्यत्तु तदुपकारकमिति निर्णीतम् ।

अयमभिप्रायः —सिद्धं हि सोमद्रव्यं नारण्यावस्थितिमात्रेण फलजनकं यजमानस्य भवितुमर्हति, किन्तु यजमानेनोपादेयत्वेन । उपादेयत्वं नाम कृतिविषयत्वं यत्किंचित्क्रियाद्वारैव सोमस्य भवति । सा च क्रिया 'सोममभिषुणोती[1]'त्यादिवाक्यविहिता'भिषवादिः 'ग्रहं जुहोती[2]'तिवाक्यसिद्धहोमपर्यन्ता विवक्षितेति होमेन भस्मसाद्भावमापन्नः सोमोऽपि क्षणिकयागादिकमिव अपूर्वद्वारैव फलजननसमर्थ इति सोमेन स्वर्गजननार्थमेकमपूर्वं कल्पनीयम् । एवं यागेनापि विना द्रव्यं स्वरूपाऽसिद्धया यत्किंचिद्द्रव्यद्वारा स्वस्वरूपसिद्धावपि स्वेन फलजननार्थमेकमपूर्वं कल्पनीयमिति प्रत्येकं फलसाधनतयाऽन्वयेऽनेकादृष्टकल्पनाप्रसङ्गः । एकस्यैव फलसाधनत्वे तु सोमकरणत्वे धात्वथः आश्रयतया सोमस्य, यागकरणत्वे द्रव्यतया सोमश्च यागस्योपकरोतीति नापूर्वद्वयकल्पना भवति ।

तत्र च कस्यैकस्य फलसाधनत्वं विवक्षितम् ? किं सोमस्योपपदार्थस्य उत यागादेर्धात्वर्थस्येति सन्देहे 'सोमेन यजेत' इत्यत्र 'यजेते'त्यस्य यागेन फलं कुर्यादिति विवरणेऽपि स्पष्टं धात्वर्थस्य यागस्य करणत्वं न प्रतीयते । न हि धातूत्तरमपि तृतीयादिविभक्तिः संभवति । 'अर्थवदधातुरप्रत्ययः प्रातिपदिक[3]'मिति धातुभिन्नमेव खलु प्रातिपदिकमित्यनुशशास पाणिनिः । 'सोमेने'ति तृतीयाविभक्त्या तु सोमस्य करणत्वं स्पष्टमवगम्यते । तथाच आख्यातार्थकृतेः सन्निहितोऽपि धात्वर्थो यथा षष्ठाद्याधिकरणन्यायेन[4] भाव्यत्वेन नान्वेति एवं साधनत्वेनापि नान्वेति ।

---

१. जै० न्या० मा० ३।६।१३ अभिषवादीनां सोमार्थत्वाधिकरणे ।

२. मी० न्या० प्र० पृ० ७ सारविवेचनीव्या० ।

३. पा० अ० १।२।४५

४. मी० द० ६।१।१ अधिकाराधिकरणम् ।

कारकश्रुत्या हि सोमस्यैव करणत्वं कामपदसमभिव्याहारेण स्वर्गस्यैव भाव्यत्वमिव स्पष्टं गम्यते। अत एव हि 'सिद्धं साध्यायोपदिश्यते' इति न्यायः। साध्यं हि फलं सिद्धेनैव भवति न साध्येन। अन्यथा साध्यस्यापि साध्यान्तरेणैव साध्यत्वे तस्यापि साध्यान्तरेण तस्यापि साध्यान्तरेण इत्यनवस्था समापद्यते। तथा च सोमस्यैव भावनायां करणत्वेनान्वयः इति पूर्वपक्षः। अस्मिन् पक्षे सोमस्य प्रधानत्वेन विकृतिषु अतिदेशो न स्यात्। सोमाभावे पूतिकस्य प्रतिनिधेर्ग्रहणमपि नोचितमिति विवेकः।

इदं तु न सङ्गतम्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वं हि नियतम्। तथाच आख्यातार्थकृतौ प्रथमतो यागस्य अन्वयानन्तरमेव उपपदार्थस्य सोमादेरन्वयः। तथाच साधनाकांक्षायां यागस्य प्रथमतः साधनत्वेन अन्वये सति अनन्तरं सोमस्य आकांक्षाऽभावेन करणत्वेनान्वयाऽसंभवात् यागोपकारकतयैव सोमस्यान्वयः।

भावना हि अंशत्रयमपेक्षते—साध्यं साधनमितिकर्तव्यतां चेति। तत्र च प्रथमतः साधनाकांक्षा अनन्तरं साध्याकांक्षा, ततः इतिकर्तव्यताकांक्षेति क्रमः। कुर्यादित्युक्ते हि प्रथमतः किमिति, तदनन्तरं किमर्थमिति, तदनन्तरं कथमिति खलु आकांक्षन्ते। तथाच भावनायां धात्वर्थस्य अपेक्षितत्वेन प्राथम्येन उपजीव्यत्वेन च एकपदबोध्यत्वप्रत्यासत्त्या धात्वर्थ एव भावनायां करणं, नोपपदार्थः सोम इति।

यत्तु षष्ठाद्याधिकरणे धात्वर्थस्य यागस्यैव फलत्वेन अन्वय इति पूर्वपक्षितं, तत्साध्याकांक्षैव प्राथमिकीत्यभिप्रायेण। सिद्धान्तस्तु साधनाकांक्षाया एव प्राथम्यात् धात्वर्थस्य करणत्वेन अन्वय इति षष्ठाद्याधिकरणमप्यत एवोपपद्यते। अन्यथा साध्याकांक्षाया एव प्राथम्ये धात्वर्थस्य कथमपि भावनायामन्वयात् पूर्वं स्वर्गकामपदार्थस्य स्वर्गस्य भाव्यत्वेनान्वयाऽसम्भवात् तदधिकरणमसंगतं स्यात्।

यत्तु 'दध्ना जुहोति[1]' त्यादौ उपपदार्थस्य करणत्वेन अन्वयः, होमस्य च

---

1. मी० न्या० प्र० पृ० १२, सा० वि० व्या०

भाव्यत्वेन अन्वयः स 'आनर्थक्यप्रतिहतानां विपरीतं बलाबल[1]' मिति न्यायेन अगत्या 'परिपूर्णं पदं पदान्तरेण अन्वेती'ति नियमोल्लघनाधीन एव ।

अस्तु वा प्राथमिकी साध्याकांक्षा अनन्तरं साधनाऽऽकांक्षा तत इतिकर्तव्यताकांक्षेति । षष्ठाद्याधिकरणसिद्धान्ते तु परिपूर्णं पदं पदान्तरेणान्वेतीति नियमस्य आनर्थक्यप्रतिहतन्यायेन 'दध्ना जुहोती'त्यत्र करणाकांक्षाप्राथम्यपक्ष इव संकोच एव कल्प्यत इति न दोषः । तथा च द्वितीयस्यां साधनाकांक्षायां साधनत्वेन धात्वर्थस्य अन्वययोग्यत्वेन तत्परित्यागेनोक्तनियमहानेन च सोमस्य न करणत्वेनान्वयो युक्त इति धात्वर्थ एव सर्वत्र सति संभवे भावनायां करणत्वेन अन्वेति । तदुक्त 'वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे[2]'इति । 'श्रुत्यर्थः सन्निकृष्टत्वं वाक्यार्थो विप्रकृष्टता[3]' इति वार्तिकात् 'वाक्यार्थविधिरूपपदार्थविधिः, श्रुत्यर्थविधिः सन्निकृष्टार्थविधिरिति निष्कर्षः । यत्तु न्यायप्रकाशे—'वाक्यार्थविधिः पदान्तरार्थविधिरित्यर्थः'—इत्युक्तं तस्याप्ययमेवाभिप्रायः ।

इदं च भावार्थाधिकरणं तत्रैव धात्वर्थस्य करणत्वेनाऽन्वयं गमयति, यत्र धात्वर्थगुणयोरप्राप्तिः । यथा—'सोमेन यजेते' त्यत्र उपपदार्थस्य सोमस्य यागस्य चोभयस्य प्रमाणान्तरेण अप्राप्तत्वात् यत्र वा उभयोरपि संभवत्प्राप्तिः प्राप्तिरेव वा । यथा—"उरु प्रथस्वे[4]ति पुरोडाशं प्रथयति", 'ऐन्द्रवायवान् ग्रहान् गृह्णीयात्' इत्यादौ । अत्र प्रथमोदाहरणे पुरोडाशविधिनैव अन्यथानुपपत्या प्रथनस्य-लिङ्गेन तत्र मन्त्रस्य च संभवत्प्राप्तिर्विद्यते चेदपि अध्वर्युकर्तृकत्वादिसिद्धयर्थं मन्त्र–प्रथनयोरुभयोरपि विधिर्विवक्षितः । द्वितीयोदाहरणे तु 'ऐन्द्रवायवं गृह्णाति[5]' इति वाक्यमन्तरेण ऐन्द्रवायवग्रहणं विहितमपि तत्र ऐन्द्रवायवग्रहणस्य प्राथम्यार्थं पुनर्विधिर्विवक्षित इत्युभयत्रापि भावार्थाधिकरणं प्रवर्तते । एवं यत्र

---

१. जै० न्या० मा० ३।४।८ शाखाहरणादीनामुभयदोहार्थताधिकरणम् ।

२. तं० वा० १।२ ।

३. तं० वा० १।२ ।

४. तै० सं० १।१।८

५. मै० सं० ४।५।८

धात्वर्थस्यैव अप्राप्तिः तत्रापि 'अग्निहोत्रं जुहोती'त्यादौ तदधिकरणं प्रवर्तते। 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्रापि अग्निहोत्रहोमस्य उत्पत्तिवाक्येन फलसामान्यसाधनत्वबोधेऽपि फलविशेषसाधनत्वस्य अप्राप्त्या धात्वर्थस्य करणत्वमेवेति भावार्थाधिकरणं प्रवर्तत एव। 'दध्ना जुहोती'त्यत्र तु होमस्य 'अग्निहोत्रं जुहोती'त्यादिभिः प्राप्तत्वात् दध्न एव करणत्वेनान्वयो न होमस्येति न भावार्थाधिकरणप्रवृत्तिः। एवं 'दध्नेन्द्रियकामस्य जुहुयादि[1]'ति वाक्येऽपि दध्न एव करणत्वेनान्वयः, धात्वर्थस्तु दध्नः फलजननार्थमाश्रयो भवति।

अत्र प्राचीनाः दधिकरणत्वं करणीभूतं दधि वा विधीयत इति वदन्ति। भाट्टदीपिकाकारास्तु यागवैषम्यं प्रमाणाभावात् दध्न एव विधानम्। न च प्राप्तत्वान्न विधिरिति वाच्यम्। पक्षप्राप्तावपि नियतप्राप्त्यभावेन विधित्वसंभवात्। 'अग्निहोत्रं जुहोती'ति वाक्यानन्तरं हि 'दध्ना जुहोति' 'पयसा जुहोति' 'यवाग्वा जुहोति' इति वाक्यैः खले कपोतन्यायेन अन्वितानां दध्यादीनां विकल्प इति दध्न पक्षप्राप्तिः, न नियता प्राप्तिः। इदं च भावार्थाधिकरणं धात्वर्थातिरिक्तायां भावनायां सत्यामेवोपपद्यते।

न च तस्यां प्रमाणं विद्यत इति वैयाकरणानामाशङ्का तु पचतीत्यस्य पाकं करोति पाकेन करोतीति विवरणानुपपत्त्यधात्वर्थस्यापि कारकत्वावगमात् तस्यापि अन्वययोग्या क्रिया आख्यातेन अवबुध्यत इत्यंगीकरणीयमिति तस्या एव करोतिपदविव्रियमाणायां भावनात्वान्नात्र प्रसरति। तथाच 'भावप्रधानमाख्यात'मिति निरुक्तमपि भावनामुख्यविशेष्यतामेव बोधयति, न धात्वर्थमुख्यविशेष्यताम्। एवं च सति सभवे नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति न्यायेन सर्वेषामपि भावनायामेव अन्वयः।

तत्र प्रातिपदिकार्थस्य प्रत्ययार्थकरणत्वादौ सुबुपात्तलिङ्गसंख्यादेरपि तत्रैवान्वयस्य अपेक्षितत्वात् चशब्दार्थसमुच्चयादेः प्रातिपादकार्थे एव अन्वयात्

---

१. तै० ब्रा० २।१।५,६।

स नियम एवं परिष्करणीयः यत् सुबुपात्तलिङ्गसंख्यातिरिक्तार्थो यो निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यः तस्य सर्वस्यापि भावनायामेवान्वयः। तथा च स्वर्गभाव्यकायां भावनायां यागस्यैव करणत्वेनान्वय इति क्षणिकस्य यागस्य फलपर्यन्तावस्थानाऽसंभवात् श्रौतार्थानुपपत्त्या अत्र अपूर्वमेकमेत्र कल्प्यत इति नानेकादृष्टकल्पनाप्रयुक्तं गौरवमापतति इति महान् लाभः।



# युक्तिरपि प्रमाणम्

श्री जनार्दनशास्त्री पाण्डेयः

"मानाधीना मेयसिद्धिः" इत्युक्तौ कानि तानि प्रमाणानीति जिज्ञासायां चार्वाकैः प्रत्यक्षमेकं, काणादबौद्धाभ्यां प्रत्यक्षानुमाने द्वे, साङ्ख्यैः प्रत्यक्षानुमानशब्दाख्यानि त्रीणि, नैयायिकैः सोपमानानि चत्वारि, प्राभाकरैरर्थापत्तिं संयोज्य पञ्च, वेदान्तिभिश्चानुपलब्धिसहितानि षट्, पौराणिकैः प्रत्यक्षानुमानोपमानशब्दार्थापत्तिसंभवैतिह्यानीति सप्त प्रमाणानि निगदितानि। किन्तु नाविदितं विपश्चितां यदायुर्वेदशास्त्रे युक्तेः कियन्महत्त्वमिति। महामुनिना चरकेण बहुधा-स्थाने-स्थानेऽवोचि "वैद्यो युक्तिज्ञो भवतु" इति। अत्र भवति विचिकित्सा यत् काः नाम तावद्युक्तिः, सा च किं स्वतन्त्रं प्रमाणं प्रमाणान्तरेऽन्तर्हितं वा ? एतदेवात्र किञ्चिद्विचार्यते।

परीक्षणसाधनानि निर्दिष्टवताऽऽचार्यचरकेणोक्तम्—"द्विविधं खलु सर्वं सच्चासच्च, तस्य च चतुर्विधा परीक्षा—आप्तोपदेशः प्रत्यक्षमनुमानं युक्तिश्च" इति। एतदेव विवृतवता तनैव सूत्रस्थाने युक्तेर्लक्षणोदाहरणे अपि निगदिते—

"जलकर्षणबीजर्तुसंयोगात्सस्यसंभवः।
युक्तिः षड्धातुसंयोगाद् गर्भाणां संभवस्तथा॥
मध्यमन्थनमन्थानसंयोगादग्निसंभवः।
युक्तियुक्ताचतुष्पादसंपद्व्याधिनिवर्हणी॥
बुद्धिः पश्यति या भावान् बहुकारणयोगजान्।
युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया॥' इति।

बहुकारणयोगजान् भावान् या बुद्धिः पश्यति, यया त्रिवर्गः (धर्मार्थकामाख्यः) साध्यते, त्रिकाला सा (एव बुद्धिः) युक्तिः ज्ञेया, इति स्पष्टोऽन्वयः, अत्र टीकाकृद्भिरन्यैश्च बहुधा प्रजल्पितम्, यथा—

"युक्तिर्न प्रमाणान्तरं व्याप्तिरूपा हि सा अनुमानमुपकरोति अतो युक्तिरनुमानेऽन्तर्भवति" इति—सेनः।

"ऊहोऽत्र युक्तिशब्देनाभिधीयते" इति—चक्रपाणिः।

"युक्ति प्रमाणोपपत्तिः, प्रमाणोपपत्तिमपेक्षमाणो यः प्रत्ययः सः तर्कः, इति केवलं संज्ञाभेदमात्रम्" इति—

न्यायवार्तिके उद्योतकाराः।

वस्तुतस्तु बहुकारणयोगजान् भावान् या पश्यति सा बुद्धिर्युक्तिरिति चरकोक्तम्। या बुद्धिः स्वाभाविकं व्याप्तिरूपं सम्बन्धं गृह्णाति सा युक्तिः स्यात् न तु व्याप्तिरेव युक्तिर्भवितुं शक्नोति।

एवमेव अनुमानं हि नाम युक्त्यपेक्षस्तर्क इत्युद्योतकाराभिप्रायः। कश्चित् कमप्यपेक्षते चेत् तयोरैक्यं कथं स्यात्। युक्तिः प्रमाणोपपत्तिः तामपेक्षमाणश्च प्रत्ययस्तर्कश्चेद् द्वयोरैक्यं कथं वक्तुं शक्यते।

तत्त्वसंग्रहकारेण श्रीशान्तिरक्षितेन स्पष्टमेवोक्तम्—

"यस्मिन् सति भवत्येव न भवत्यसतीति च।
तस्मादतो भवत्येतद्युक्तिरित्यभिधीयते॥
प्रमाणान्तरमेवेदमित्याह चरको मुनिः।
नानुमानमिदं यस्माद् दृष्टान्तोऽत्र न विद्यते॥" इति।

एतदेव कारिकाद्वयं व्याचक्षाणेन कमलशीलेनाभिहितम्—

"तद्भावभावित्वेन या तत्कार्यताप्रतीतिरियं युक्तिः। इदं च सविकल्पकत्वान्न प्रत्यक्षम्, नाप्यनुमानं दृष्टान्ताभावात्, तथाहि दृष्टान्तेऽप्यत एव तद्भावभावित्वात् तत्कार्यताप्रतिपत्तिः, तथापि दृष्टान्तेऽन्योऽन्वेषणीयस्तत्र चापर इत्यनवस्था स्यात्, तस्मात् प्रमाणान्तरमेव युक्तिः।" इति।

इदमत्र विशेषेणावधेयं यच्छान्तिरक्षितेनास्या अनुमानत्वे दृष्टान्ताभाव एवोक्तः, किन्तु कमलशीलेन तत्रानवस्थादोष एव दर्शितो नत्वभावः समर्थितः।

अस्याश्च युक्तेश्चरकेणोदाहरणद्वयं प्रदर्शितम्—

१. जलकर्षणबीजर्तुसंयोगाद्यथा त्रिकाला (भूते, वर्तमाने, भविष्ये वा) सस्योत्पत्तिर्भवति तथैव षड्धातुसंयोगात् गर्भस्यापि।

२. मथ्यं अध स्थोऽरणिः) मन्थन (ऊर्ध्वस्थोऽरणिः) मन्थानः (मथनकर्ता)— एतेषां संयोगात् यथाग्निरुत्पद्यते तथैव चतुष्पादसंपद् (रुग्णः, परिचारकः, औषधं, वैद्यश्चेति) व्याधिनिर्हरणी भवति इति।

यथा प्रत्यक्षेणानुगृहीतत्वेऽप्यनुमानस्य प्रमाणस्वातन्त्र्येण व्याहन्यते तथैव युक्तिद्वारानुगृहीतत्वेऽपि न व्याहन्येत। अतो युक्तिरपि स्वतन्त्रमेव प्रमाणमिति चरकाशयः।

एकस्य प्रमाणस्य प्रमाणान्तरसाहाय्येऽपि स्वातन्त्र्यमक्षुण्णं भवतीति तूपमानस्य स्वातन्त्र्येण स्पष्टमेव।

---

## जयवंशकाव्ये देवस्तुतिः

### डॉ० रामदत्तशर्मा

जयवंशमहाकाव्यस्य लेखनं पर्वणीकरकुलोत्पन्नेन श्रीसीतारामचतुर्वेदिमहोदयेन कृतम्। काव्येस्मिन् आमेरसाम्राज्यस्य आदिप्रशासकस्य श्रीसोढदेवमहोदयस्य वर्णनात् आरभ्य प्रथममाधवसिंहस्य वर्णनं यावत् साम्राज्यकालस्य सुन्दरं काव्यात्मकं विवेचनं वर्तते।

काव्येस्मिन् अनेकेषां देवानां वर्णनं प्राप्यते। अत्र विचार्यते यत् तस्मिन् काले केषां-केषां देवानां विशिष्टं स्थानमासीत्। जनानां ,देवान् प्रति कीदृशी भावना आसीत्। वर्तमानकाले तेषां मध्ये केषां केषां स्थानानि उपलभ्यन्ते।

### यमवादेवी जमवादेवी वा

श्रीसोढदेवस्य पुत्रः दुर्लभदेवः आसीत्। यदा सः दौसानगरं विजित्य माचीक्षेत्रं प्रति गच्छति तदा तेन सह बलिष्ठानां ग्रामीणानां युद्धं जातम्। युद्धेऽस्मिन् कुमारः भूमौ पतितः मोहं गतः। रात्रौ, हे पुत्र! उत्तिष्ठ इत्येतद् श्रुत्वा कुमारः उत्थाय देवीं सम्मुखे दृष्ट्वा स्तुतिं चकार—

नमोऽस्तु ते देवि विशालनेत्रे
कृपानिधे! त्वं शरणागतान्नः।
पाहि प्रशंस्यासि महेन्द्रपूर्वैः
सुरं न चेत्तर्हि कुतो मनुष्यैः॥

ईदृक्पूजानन्तरं देवी श्रीदुर्लभदेवं कथयति यत् यदि त्वं बाणनद्यास्तटे मम यमवनाम्नीं मूर्तिं स्थापयित्वा पूजनं करिष्यसि तर्हि त्वं रणे विजयं प्राप्स्यसि। इदं श्रुत्वा कुमारदुर्लभः पृच्छति यत् मम सैनिका मृताः अतोऽहं कथं विजयं प्राप्स्यामि। तदा देवी उत्तरयति यत् तव स्पर्शमात्रेण तव सेना जीविता

भविष्यति इति। एतत् कथयित्वा देवी अन्तर्हिता। तदनन्तरं महाराजदुर्लभेन देवीवचनानुसारं युद्धं कृतं विजयश्च लब्धः।

वयम् दौसानगरात् यदि माचीक्षेत्रं प्रति यामः तर्हि स्पष्टं भवति यत् माचीप्रदेशः यमवारामगढस्य निकटवर्ती क्षेत्रम् अस्ति। रामगढबन्धसमीपे अद्यापि प्राचीनं देवीमन्दिरं विराजते यत्र नित्यं वन्दना भवति। जमवाशब्दस्तु यमवाशब्दस्यैव परिवर्तितं रूपम्।

अम्बादेवी शिलामातरम् वा —

नृपतिः प्रथमो मानसिंहो वीर आसीत्। तेन निजजीवने अनेकानि युद्धानि कृतानि। तेषां वर्णनानि जयवंशस्य सप्तमे सर्गे प्राप्यन्ते। दिग्विजयाय महाराजो मानसिंहो वंगदेशं प्राप्तः। स केदारनृपमभिदुद्राव। यदा सः केदारं पराजेतुं समर्थो न बभूव तदा निशायां जयप्रभावेण देवी प्रकटोबभूव। सा नृपम् अकथयत् यत् तेन पुनर्युद्धं करणीयम्, येन जयो भविष्यति। प्रातः नृपो विजयम् अलभत। किन्तु केदारेण भगवत्या मूर्तिर्नद्यां पातिता। देवी स्वप्ने मानसिंहं उक्तवती यत्—'दुष्टेन मम मूर्तिर्जले पातिता, अतएव हे सुत ! मम प्रतिमां यत्नपूर्वकमन्विष्य स्वनगरे स्थापय।' नृपेण तथैव कृतम्। महाकविना अत्र महालयस्य शोभनं वर्णनं कृतम् ( जयवंशम्—७ १ ६—२३,८७ )।

कविना देव्याः कृते 'अम्बेति' प्रयोगः कृतः। अधुना यत् आमेरनगरं वर्तते तदेव तात्कालिकी अम्बापुरी आसीत्। वर्तमानकाले देवी 'शिलादेवी' 'शिलामातरम्' वा ख्यायते लोके सा सर्वानन्ददात्री वर्तते। मानसिंहनृपतिमभिलक्ष्य एका उक्तिर्जयपुरस्य जनसमुदाये अतीव प्रचलिता वर्तते —

सांगानेर को सांगो बाजो, जयपुर को हनुमान।
आमेर की शिलादेवी ल्यायो राजा मान॥

महाकाव्यस्य अंतिमे सर्गे कविना जयपुरनगरस्य नृपाणां देवालयानां च वर्णनं कृतम्। तत्र सः पुनः अम्बादेवालयस्योल्लेखं करोति। सः लिखति—

अम्बापुरी सादिपुरी मनोज्ञा
मनोज्ञहर्म्या गुणिलोकपूर्णा।

अधिष्ठिता यां सततं सुमूर्त्तिः
अम्बा मनोज्ञाभयसन्निविष्टा ॥ (जयवंशम्—१९:९१)

नवरात्रे मन्दिरेऽस्मिन् विशिष्टानि पूजावन्दनानि भवन्ति ।

## गोविन्ददेवमहालयः

भगवतो गोविन्ददेवस्य मन्दिरस्य मूर्तिः प्रथमं वृन्दावने स्थापिताऽसीत् । यवनसम्राजः अवरंगजीवस्य काले आक्रमणसम्भावनया मूर्तिः जयपुरं समानीता । अस्य देवालयस्योल्लेखः कविना पुनः अन्तिमसर्गे कृतः । अधुना देवालयोऽयं राजप्रासादानामुत्तरस्यां दिशि विद्यते । प्रतिदिनं सहस्राधिक-भक्तजना गोविन्ददेवस्य दर्शनार्थं गच्छन्ति ।

## महादेव-मन्दिरम्

आमेरस्य विद्वत्सु रसज्ञेषु भटेषु, नृपेषु च द्वितीय-सवाई-जयसिंहस्य अभिधानम् अविस्मरणीयं वर्तते । सः विद्वान् परमभक्तश्चासीत् । कविः वर्णयति—'देवालया यत्र नगण्यसंख्या' इति । कविना सवाईजयसिंहेन निर्मापितस्य विश्वेश्वरमहादेवस्य वर्णनं कृतम्—

विश्वेश्वरो विश्वगुणप्रकाशी
करिष्णुराजानुविलम्बिबाहोः ।
नृपस्य यस्मिन्वसति स्वलैङ्गीं
विधाय मूर्तिं सदयोऽघिभक्तम् ॥

अन्तिमसर्गे कविना पुनः विश्वेश्वरमहादेवस्य वर्णनं कृतम् । तत्र कथितं यत् विश्वेश्वरस्य देवालयोऽतीवरमणीयो नृपाणां हितार्थं च विजयार्थं च विद्यमानो वर्तते ।

श्रीमहादेवस्येदं मन्दिरमधुनाऽपि राजप्रासादानां पार्श्वे विद्यते । इद मर्मरोपलैः ( संगमरमर इति भाषायां ) निर्मितमस्ति । देवालयेस्मिन् शिवलिङ्गातिरिक्ताः पार्वतीगजाननकालभैरवनन्द्यादीनां मूर्तयः वर्तमानाः सन्ति ।

## कल्किदेवालयः

'कल्किमन्दिरम्' सवाई जयसिंहकालिको देवालयो विद्यते । कविः कथ-

यत्र यत् म्लेच्छान्विहन्तुं लोकस्य कल्कानि विहन्तुकामः कल्किदेवो वसति स्म। मन्दिरमिदं अधुना सिरह् ड्योढी इत्यापणे विद्यमानं वर्तते।

## गालवाश्रमः

द्वादशसर्गे कविना गालवाश्रमस्य वर्णनं कृतम्। कविना सः पर्वतस्य शिखरे वर्णितः। कविः कथयति यत् अतीवरमणीयोऽयमाश्रमः। अन्तिमसर्गे लिखितम्—

अस्ति गालवपदं सुमनोज्ञं
पल्लवोपवनमण्डितमुच्चैः।
यत्र गोमुखमुखाज्जलकुण्डे
निष्पतन्निव झरः सुरनद्याः॥

गालवाश्रमोऽधुना 'गलता' इति नाम्ना प्रसिद्धः। जयपुरनृपाणां विशिष्टं तीर्थम् अस्ति गालवाश्रमः। एवं किंवदन्ती प्रचलति यत् जयपत्तनस्य एको नृपः मृगयार्थं गतः। तेन एकस्य सिंहस्य पादे बाणः पातितः। स सिंह एकः ऋषिरासीत्। तस्य शापेन सः नृपः कुष्ठी बभूव, अतीव दुःखितश्च जातः। तेन एकः ऋषिः दृष्टः। ऋषिणा नरेन्द्रः उपदिष्टः यद् यदि सः एकस्य नीरकुण्डस्य निर्माणं कारयित्वा तस्मिन् स्नानं करिष्यति तदा तस्य कुष्ठरोगः स्वयमेव नङ्क्ष्यति। कथ्यते यत् नृपेण तथैव आचरितम्। सः स्वस्थो जातः। इत्थं गालवाश्रमस्योत्पत्तिः वर्णिता।

## हनुमन्मन्दिरम्

घाटस्थितस्य हनुमन्मन्दिरस्य वर्णनमपि जयवंशकाव्ये वर्तते। तत्र भौमवासरे जना गोधूमचूर्णाहितमोदकानां प्रसादं देवाय अर्पयन्ति। कविः लिखति—

यस्मिन्वसत्यविरतं हनुमान्कपीन्द्रः
सन्मन्दिरे सकलवाञ्छितदानदक्षः।
गोधूमचूर्णकृतलड्डुकचूर्णतृप्त—
विप्रप्रसन्नहृदयः प्रतिभौमवारम्॥

हनुमतः इदं मन्दिरं निर्झरस्य पार्श्वे वर्तते। जनास्तत्र विनोदार्थं गच्छन्ति। तत्र मयूराः नृत्यन्ति। अधुनाऽपि आगरा-जयपुर-प्रमुखमार्गेऽस्य गलताघाटोपमार्गे अयमाश्रमो विद्यते।

—:०:—

# व्यञ्जनावृत्तिसमीक्षा

पं० रामप्रसादत्रिपाठी

## व्यञ्जनायाः स्वरूपम्

शिष्यानव्याप्य सायंकाले गुरुर्वक्ति—'अर्कोऽस्तं गतः' इति। वाक्यनिष्ठ-शक्तिसम्बन्धेन सूर्यकर्तृकं भूतकालिकमस्तं गमनमिति बोधो भवति। परन्तु तद्बोधेन सहृदयानां मनसि न भवति विश्रान्तिः, अपि तु अस्माभिः सर्वैरपि सन्ध्योपासनं कर्तव्यमिति अस्य द्वितयार्थस्य बोधेनैव विश्रान्तिर्लभ्यते। स चायं द्वितीयोऽर्थः उक्तवाक्येन सम्बद्ध एव बोध्यते, असम्बद्धो वा? न तावदन्त्यः पक्षः। असम्बद्धार्थबोधनेऽतिप्रसङ्गो दुर्निवारः स्यात्, कस्याप्यर्थस्य बोधोऽस्तु नाम, को वारयेत्? नापि प्रथमः सम्बन्धस्तस्याद्यावधि अज्ञातत्वात् इति चेत्, उच्यते—यो हि सम्बन्धो भवद्भिरज्ञातः स व्यञ्जनाभिधोऽस्ति इति ज्ञायताम्। शब्दतदर्थयोरयं सम्बन्धो द्योत्यद्योतकभावव्यङ्ग्यव्यञ्जकभावरूपाभ्यामपि संकीर्तितो भवति। अयं च सम्बन्धो वाच्यवाचकभावरूपशक्ति-सम्बन्धात्, लक्ष्यलक्षणभावरूपलक्षणासम्बन्धाच्च विलक्षण एवास्ति।

शक्यार्थसम्बद्धः असम्बद्धो वा नानाविधोऽर्थोऽनेन सम्बन्धेन बोध्यते। व्याकरणदर्शनस्य तु अयं सम्बन्धः प्राणभूत एवास्ते, एनमन्तरा व्याकरणशास्त्र-सर्वस्वभूतस्फोटतत्त्वस्य प्रकाशनमेव न भविष्यति। उक्तञ्च महर्षिणा श्रीव्याडिना—

शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।[1]
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते॥ इति।

श्रीभर्तृहरिणा च—

प्रत्येकं व्यञ्जका वर्णा भिन्ना वाक्यपदेषु ये[2]। इति।

---

१. वा० प० १.७६, हरिवृषभटीकायामुद्धृतेयं कारिका। २. वा० प० १.८८

अत्र प्रथमयोक्त्या प्राकृतध्वनेः शब्दस्य (स्फोटस्य) व्यञ्जकत्वं वैकृतध्वनेः स्थितिविशेषहेतुत्वात् प्रतिपाद्यते। द्वितीययोक्त्या प्रत्येकं वर्णाः पदस्फोटं वाक्यस्फोटं च व्यञ्जयन्ति। अत्र वर्णपदेन प्राकृतध्वनिरेव गृह्यते। अत एव चोक्तम्—

प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते।[1]

यतः प्राकृतध्वनिः स्फोटस्य व्यञ्जकः, अतः तदायो मात्राद्विमात्रात्रिमात्रात्मकः कालः स्फोटस्यारोपितः कालो भवति, स्फोटस्तु वस्तुतो दिग्देशकालाद्यनवच्छिन्न एव, विभुनोऽपरिमितत्वादनवच्छिन्नत्वाच्च।

आभ्यामुक्तिभ्यां ध्वनेर्व्यञ्जकत्वं सुस्पष्टमायाति, अतश्च ध्वनिगता व्यञ्जनावृत्तिः स्वीकार्या, अनया व्यञ्जनया स्फोटस्य स्वरूपमभिव्यक्तं भवति, अतः स्फोटरूपव्यङ्ग्येन सह ध्वनिरूपव्यञ्जकस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धः सुसम्पन्नो भवति। परन्तु अनया व्यञ्जनया पदार्थबोधो वाक्यार्थबोधो वा न भवति, अर्थस्य बोधस्तु स्फोटेनैव, प्रकाशितेन भवति इति जिज्ञासायां तदपि तत्त्वं शाब्दिकैरभ्युपेयते एव—स्फोटोऽपि अर्थस्य व्यञ्जको भवति इति।

व्यञ्जनायां प्रमाणम्

प्रमाणं चात्र "उपसर्गाः क्रियायोगे" इति सूत्रीयं भाष्यम्।[2] तथाहि क्रियायोग इत्यनेन क्रियया सहोपसर्गस्यायं व्यङ्ग्यव्यञ्जकभावसम्बन्ध एवाभिप्रेतो भगवतः सूत्रकारस्य, न तु वाच्यवाचकभावः, स तु क्रियया सह धातोरेव।[3] किञ्च भूवादयो इति सूत्रीयं भाष्यमत्रास्ति प्रमाणभूतम्। तथा हि—"क्रियाविशेषक उपसर्गः, पचतीति क्रिया गम्यते, तां प्रत्युपसर्गो विशिनष्टि" इत्युक्तं भाष्यकृता। उद्‌द्योतकारेण चैवं व्याख्यातम्—क्रियाविशेषक उपसर्ग इति—अथान्वयव्यतिरेकाभ्यां प्रत्ययोऽर्थबोधकः, तथा ताभ्यामेव क्रिया—गतविशेषद्‌योतक उपसर्गः क्रियावाची धातुरेवेति भावः, इति।[4] अत्र क्रिया—विशेषक उपसर्गः, क्रियागतविशेषद्योतक इत्यर्थः, एवञ्च क्रियाविशेषस्य

---

१. म० भा० प्र० उ०, १।३।१।

२. म० भा० १।४।५९।

३. भ० भा०—१।३।१।

४. म० भा० १।३।१

द्योत्यता, उपसर्गस्य द्योतकता स्पष्टं लभ्यते । क्रियोपसर्गयोः द्योत्यद्योतक-भावसम्बन्धः सुतरामनुभूयते ।

किञ्च, भूवादय इति सूत्रस्य 'क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः, इत्यर्थे क्रियावाचिन इत्यंशो व्यञ्जनावृत्तिमहिम्नैव लब्धः, अन्यथा वादयो भ्वादयो धातुसंज्ञाः इति प्रथमकक्षा, ततश्च आदिशब्दस्य प्रकारवाचितया वाप्रकार-भ्वादयो धातुसंज्ञाः इति द्वितीयकक्षा, ततः प्रकारशब्दस्य सदृशार्थकत्वेन वा सदृशा भ्वादयो धातुसंज्ञा इति तृतीयकक्षा, ततश्च प्रतियोगितावच्छेदकव्यापकी-भूतधर्मेण सादृश्यं गृह्यते इति नियमबलेन क्रियावाचिनो भ्वादय इत्यादि लभ्यते, प्रतियोगितावच्छेदकवात्वव्यापकीभूतेन क्रियावाचित्वेन सादृश्यस्य ग्रहणात् । इदं च क्रियावाचित्वं न शक्त्या लब्धुं शक्यम्, वादिपदस्य तत्र शक्तेरभावात् । नाऽपि लक्षणया प्राप्तव्यः, लक्षणायाः शाब्दिकमतेऽभावात् । नाऽपि शक्यतावच्छेदकस्यारोपः कर्तुं शक्यः । मुख्यार्थस्य बाधितस्थले एव तदौचित्यात्, प्रकृते वा सदृशरूपो वादिशब्दस्य मुख्योऽर्थस्तस्य भ्वाद्यर्थेऽन्वय-बाधो नास्ति इति कृत्वा व्यञ्जनावृत्तिरेव शरणम् ईदृशार्थबोधने । अयमर्थो न प्रमाविषयतामधिरोहति, इति तु न वाच्यम्, भगवता भाष्यकृतैवास्यार्थस्य महता सरम्भेण बोधितत्वात् ।[1] अपि चात्रैव सूत्रे शब्दतः स्फुटं व्यञ्जनायाः समर्थनं क्रियते भाष्यकारेण । तथा च—"नान्तरेण क्रियां भूतभविष्यवर्तमान-काला व्यज्यन्ते । अस्त्यादिभिरपि भूतभविष्यद्वर्तमानकाला व्यज्यन्ते" इति ।[2] अत्र व्यज्यन्ते इत्यस्य व्यञ्जनया बोध्यन्ते इत्यर्थः सुस्पष्टं प्रतीयते ।

एवमेव "आरोपितत्वं नञ्द्योत्यम् ।[3] "द्योतकाः प्रादयो येन"[4] इत्यादिकया भट्टोजिदीक्षितोक्त्या, वैयाकरणसिद्धान्तलघुमञ्जूषायामेतत्समर्थने श्रीनागोजि-भट्टोक्त्या[5] किञ्च 'व्यर्थं सद यत्सूत्रं पदं वा ज्ञापकमुच्यते, तत्सर्वं व्यञ्जकमेव शब्दप्रमाणपर्यालोचनायाम् इति भैरवमिश्रोक्त्या[6] च एषा व्यञ्जनाख्या वृत्तिः" प्रतिपदं समाद्रियते शाब्दिकैः ।

---

१. म० भा० १।३।११ २. म० भा० तदेव

३. वै० भू० सा० कारि०—४० ४. वै० भू० सा० कारि०—४०

५. वै० सि० ल० म०—र० प्र० युता—पृ० १३३ ६. भै० परिभाषे टी०—१ प्रक०

### अस्याः स्वीकारे कलाटीकाकृतां श्रीबालंभट्टानां युक्तयः

लघुमञ्जूषायाः कलाटीकायां श्रीबालंभट्टा एतत्समर्थने बह्वीर्युक्तीः उपस्थापयामासुः । तथाहि—"यत्तु गतोऽस्तमर्क" इति, तन्न रमणीयतामर्हति उक्तवाक्यश्रवणोत्तरं सन्ध्यावन्दनं कर्तव्यमिति मया स्मृतम् इत्यनुव्यवसायो न भवति, तत्ताया उल्लेखोऽपि न भवति, स्मृतौ तु तत्तोल्लेख आवश्यकः । इदं पदं वाक्यं वा एतदर्थस्य न वाचकम्, न लक्षकम्, न चाऽपि स्मारकम्, अपि तु व्यञ्जनया बोधकमिति प्रामाणिकव्यवहारेण शक्त्यादिव्यतिरिक्ताया व्यञ्जनाया अभ्युपगमाच्च । मुख्यार्थासंबद्धस्यापि अनया बोधदर्शनाच्च[1]" इति ।

### अस्याः स्वरूपनिर्वचने श्रीनागोजिभट्टानां विलक्षणं कृत्यम्

सिद्धान्तलघुमञ्जूषायामेतत्स्वरूपनिरूपणावसरे 'संस्कारविशेषो व्यञ्जना, इत्यूचिरे श्रीनागोजिभट्टाः । संस्कारे विशेषस्त्रिधा उक्तस्तैः । तथा च यथा लक्षणया मुख्यार्थबाधग्रहपूर्वकमेव बोधो भवति, तथात्र न भवति मुख्यार्थस्य बोधग्रहो भवतु वा न भवतु, अनया तु बोधो जायते एवेतिमुख्यार्थबाधग्रह-निरपेक्षबोधजनकत्वं संस्कारे प्रथमो विशेषः । लक्षणया तु मुख्यार्थसम्बद्धस्यैव अप्रसिद्धस्यैव वा बोधो भवति, अनया तु स नियमो न समाद्रियते इति मुख्यार्थ-सम्बद्धासंबद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयकत्वमुक्तसंस्कारे द्वितीयो विशेषः ।

उक्तसंस्कारस्योद्बुद्धानुद्बुद्धत्वसाधारण्यैः सर्वत्रैव सर्वेषामनया बोधः कथं न भवतीति ? इत्यतिप्रसक्तिवारणाय वक्त्रादिवैशिष्ट्यज्ञानस्यैतज्जन्यबोधे सहकारिताऽभ्युपेयते इति वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धत्वमपि तत्र तृतीयो विशेषः[2] इति ।

अत्रोच्यते-एषा संस्कारविशेषरूपा व्यञ्जना न्यायदर्शने समवाय-सम्बन्धेनात्मनि तिष्ठेत् वेदान्तदर्शने तादात्म्यसम्बन्धेनान्तःकरणे निवत्स्यति इति शब्दतदर्थयोरुभयोरपि अविद्यमानतया तयोरस्यां कथं सम्बन्धता स्यात् ?

---

१. वै० सि० ल० म० क० टी० पृ० १६२

२. वै० सि० ल० म०–र० प्र० युता—पृ० १३३ ।

सम्बन्धस्योभयवृत्तित्वनियमात्। अस्यां परिस्थितौ न्यायशास्त्राभ्युपगतायाः इच्छायाः शक्तित्वाङ्गीकारे तस्याः पदपदार्थयोः सम्बन्धत्वाभावरूपं दूषणं पूर्वं भवद्भिरेवोद्भावितं तार्किकाणां शिरस्सु[1] स एव दोषोऽधुनोक्तसंस्कारस्य वृत्तित्व-समर्थकानां भवतां शिरस्यापि आपतितः कथं दूरीकर्तुं शक्य इत्यहो विलक्षणं कृत्यं भवतां मान्यवराणाम्।

उक्तविषये समन्वयप्रकारः

व्यङ्ग्यव्यञ्जकभावसम्बन्धरूपैव व्यञ्जना मन्तव्या, संस्कारविशेषस्य तु तज्ज्ञापकतया तस्मिन् ज्ञापके हेतौ व्यञ्जनापदस्य व्यवहारो लक्षणया अप्रसिद्ध-शक्त्या वा। अनुभूयते च क्वचित्कार्ये क्वचिच्च कारणे एकस्यैव शब्दस्य प्रयोगः, यथा शक्यसम्बन्धरूपे कारणे लक्षणापदस्य व्यवहारो भवति न्यायशास्त्रे। शक्यताऽवच्छेदकारोपात्मके तत्फले लक्षणाशब्दस्य प्रयोगो भवति व्याकरणशास्त्रे। उच्यते च स्वयमपि—द्योतकत्वं च क्वचित् समभिव्याहृतपदीयशक्ति-व्यञ्जकत्वम्[2] इति। एतेनोक्तस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धस्य व्यञ्जना—पदेन ग्रहणं शब्दस्थले स्पष्टं सूचितमस्ति। अपि च यथा दीपे प्रकाशकत्वशक्तावपि घटादिभिः संयोगसम्बन्धे सत्येव तस्याश्चरितार्थता वक्तुं शक्या, नान्यथा, तथैव शब्दे व्यङ्ग्यव्यञ्जकभावसत्त्वेऽपि अर्थेन सह तद्भिन्नस्य तादृशसंस्कार-विशेषविषयत्वस्य सत्तयैव तच्चरितार्थता। उक्तञ्च—

उपकारः स यत्राऽस्ति धर्मस्तत्रानुगम्यते।[3]

ननु अर्थबोधात् प्राक् कथमस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धस्य ज्ञानम्? एतज्ज्ञानमन्तरा च कथमर्थविशेषविषयकः शाब्दबोधः इति चेत्, अत्रोच्यते—वाच्यवाचकभावसम्बन्धवदस्याप्यनादितया दोषाभावात्। एतच्च पदविषयक-व्यञ्जनाविषये वाक्यगता व्यञ्जना तु स्वरूपसती एव शाब्दबोधजनिका, वाक्यनिष्ठ-

---

१. वै० सि० ल० ल०–र० प० पुता–पृ० १७। शक्तिनिरू०।

२. वै० सि० ल० म०—व्य० निरूपण।।

३. वा० प०—३।३।६

शक्तिसम्बन्धवत्[1]। अत एवोक्तं कलाकृद्भिः—'व्यञ्जना स्वरूपसतो हेतु'रिति[2]।

## वाक्यनिष्ठा शक्तिरपि ज्ञातैव बोधहेतुः

परमार्थदृष्टया वाक्यगता शक्तिरपि ज्ञाता सत्येव शाब्दबोधं जनयति, इत्येव सिद्धान्तः[3]। अत्रेयमाशङ्का जागर्ति—यद् वाक्यार्थस्य वाक्यशक्त्यैव ज्ञातत्वे तस्यापूर्वत्वं भज्येतेति चेत्, अत्रेत्थं पर्यालोच्यते—पदार्थांशे पदस्य शक्तेः सत्त्वेन पारिशेष्यादन्वयांशे एव वाक्यशक्तिः पर्यवस्यति। तत्रान्वयसामान्ये सा शक्तिः, अन्वयविशेषस्तु समभिव्याहाररूपाकाङ्क्षाज्ञानेनैव लभ्य इत्यन्विताभिधानवादिमतवदेतस्योपपत्तिः[4]। यदि तु समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं शक्तिग्रहः, पश्चात्तत्तत्पदे आवापेनोद्वापेन च तद्ग्रह इति शाब्दिकानां राद्धान्तेनोक्तव्यवस्था[5] न सम्भवतीति उच्यते, तदा श्रीनागोजिभट्टसिद्धान्तमनुसृत्य मध्ये स्मृतिरूपाया वाक्यार्थोपस्थितेरसम्भवेन व्यापारतयानपेक्षणेन[6] चेष्टं साधनीयम्, स्फुटीकृतश्चायमाशयो दर्पणकृताऽपि[7]।

वाक्यार्थज्ञाने पदार्थज्ञानं व्यापार इति भाष्यमतं तु प्रक्रियाकल्पे पदार्थोपस्थितिविधया जायमाने वाक्यार्थबोधे एवेति न तत्पक्षाद्विरोधः। वाक्यनिष्ठशक्तिज्ञानेन वाक्यार्थस्य स्मरणमेव कुतो न स्वीक्रियते? एकसम्बन्धिज्ञानमपरसम्बन्धिनः स्मारकमिति नियमादिति तु न शङ्कनीयम्. एकसम्बन्धिज्ञानं हि उद्बुद्धसंस्कारमात्रेणापरसम्बन्धिनं स्मारयति, अतएव धूमज्ञानेन व्याप्तिज्ञान-

---

१. यदि च पदशक्तिः पदार्थांशे ज्ञाता, अन्वयांशे चाज्ञातोपयुज्यते, इति तु कुब्जशक्तिवादः, तदा ममापि वाक्यशक्तिरज्ञातैवोपयुज्यते इति वादाभ्युपगमस्तुल्य इति भावः वै० भू० सा० स्फो० निरू० कारि०—६६। पृ० २६७।

२. वै० सि० ल० म०, क० टी०—पृष्ठ १६१।

३. वै० भू० सा० कारि०—६७।

४. वै० सि० ल० म० टिप्पणी-पृ० ३६४–६५।

५. वै० भू० सा० स्फोटनिरू०—कारि० ६७।

६. वै० सि० ल० म०—र० प्र० युता—पृ० ४०५।

७. वै० भू० सा० द० टी० कारि०—६७।

सहकृते नाग्नेरनुमितिरेव भवति न तु एकसम्बन्धिज्ञानविषयाऽपरसम्बन्धिनोऽग्नेः स्मृतिः। एवमेवात्र वाक्यशक्तिपक्षेऽपि 'सैन्धवमानय, इत्यादिनानार्थकस्थले एकतरार्थविषयकबोधोत्पत्तये तात्पर्यज्ञानस्यापि सहकारितया स्वीकारेणोक्तशङ्का नोपस्थातुमर्हति। शब्दानां स्वरूपेऽर्थेऽपि शक्तिरिति शाब्दिकसिद्धान्तेन घटोऽस्ति इत्यादिस्थलेऽपि अर्थद्वयविषयकबोधसम्भावनायां सर्वत्रैव तात्पर्यग्रहस्य हेतुतयाऽपेक्षिततत्वेन संस्कारमात्रस्य हेतुत्वाभावान्नास्ति वाक्यार्थस्य स्मृतित्वा-शङ्का। एवं च वाक्यनिष्ठशक्तेर्ज्ञानस्य हेतुत्वे सिद्धान्तिते वाक्यनिष्ठव्यञ्जनाया अपि ज्ञानमेव वाक्यार्थबोधे हेतुत्वेन स्वीकरणीयम्।

## व्यञ्जनायाः स्वरूपसत्या हेतुत्वे कलाकृत्सम्मतिः

व्यङ्ग्यार्थस्यानैयत्येन शब्देन सहानादिसम्बन्धासम्भवेन संस्कारविशेषस्यैव व्यञ्जनात्वपक्षेण न पदे वाक्ये च सर्वत्र स्वरूपसती एव व्यञ्जना हेतुः। एता-वता शाब्दबोधात्प्राक् कथं व्यङ्ग्यव्यञ्जकभावरूपसम्बन्धस्य ज्ञानमिति शङ्काया उत्थानमेव न भवति। अतएवोक्तमनपदमेव व्यञ्जनायाः स्वरूपसत्या हेतुत्वं कलाकृद्भिः "शक्तिरेतज्जन्मगृहीतैव बोधहेतुः, व्यञ्जना तु जन्मान्तरगृहीताऽपि, इत्यपि शक्तेरन्याभेदकत्वम्। इदमेवाभिप्रेत्य व्यञ्जना स्वरूपसती हेतुरिति प्रवादः।[1] अतिरिक्ताया व्यञ्जनायाः पदार्थान्तरत्वस्य स्वरूपसत्या अन्वयबुद्धौ तद्धेतुतायाः प्रमाणाभावेनासत्त्वाच्चेति श्रीजगदीशतर्कालङ्कारमतेनापि[2] एतत्प्रत्येतुं शक्यते यद् व्यञ्जनावादिमते स्वरूपसत्या एव तस्याः शाब्दहेतुत्वस्याभ्युप-गम इति।

## वस्तुतस्तज्ज्ञानस्य हेतुत्वेऽपि न कश्चन विरोधः

व्यङ्ग्यव्यञ्जकभावसम्बन्धस्य व्यञ्जनात्वभूते तस्य ज्ञानं शाब्दबोधे हेतुतया अभ्युपेयते। यथा लक्षणेत्थंभूताख्यानं[3] इति सूत्रे 'उदाहृतस्य 'वृक्षं' प्रति विद्यो-

---

१. वै० सि० ल० म—क० टी०—पृ० १६१।

२. शब्दशक्तिप्रकाशिका-कारिका—२४—पृ० १७६।

३. पा० सू०—१।४।९०।

तते विद्युत्' इत्यस्य वृक्षसम्बन्धिविद्योतनमित्यर्थः प्रादर्शि मनोरमाकृता ।[1] तत्र वृक्षविद्योतने शक्यार्थौ लक्ष्यलक्षणभावसम्बन्धश्च प्रतेर्द्योत्योऽर्थस्तस्य वृत्तिजन्योपस्थितेरभावे कथमन्वयबोधः स्यादिति तत्र व्यञ्जनाया ज्ञानमावश्यकम् । एवमेव सर्पिषोऽपि स्यादित्यत्र विन्दुरूपेत्यर्थे अपि शब्दस्य व्यञ्जनावृत्तिः तस्या ज्ञानेनैव विन्दुरूपार्थस्योपस्थितिः, तद्विषयकः शाब्दबोधश्च अपिशब्दस्य कर्मप्रवचनीयभेदे प्रक्रियापक्षे इदमेवोचितम् । ध्वनितं चैतत् 'अपिः पदार्थः' इति सूत्रव्याख्यावसरे सिद्धान्तकौमुद्याम्,[2] लघुशब्देन्दुशेखरे[3] च ।

किञ्च-शाब्दबोधे वृत्तिविशिष्टज्ञानस्य हेतुत्वं वदद्भिर्मञ्जूषाकारैः अस्या ज्ञानस्य हेतुता स्पष्टं प्रतिबोधिता । अन्यथा लक्षणायाः शक्तिरूपत्वे व्यञ्जनायाश्च स्वरूपसत्त्या एव हेतुत्वे तत्र वृत्तिपदं निष्प्रयोजनं स्यात् । अतश्च प्रकृतिप्रत्ययपदान्यतमशब्दस्थलेऽज्ञाताया वृत्तेरनुपयोगे ज्ञाताया एव व्यञ्जनायां हेतुता । अन्यत्र त्वस्तु नाम स्वरूपसत्त्याः कारणता इति विचारयन्तु सुधियः ।

किञ्चानुमानेनार्थापत्त्या लक्षणाज्ञानेन वा एषा गतार्था इत्यभ्युपेयते न्यायदर्शनविद्भिः । ततोऽप्यायाति यदस्या ज्ञानमेव शाब्दं प्रति कारणमिति । न हि ज्ञानस्य प्रतिविधानं ज्ञानाद् विजातीयेन कर्तुं शक्यते ।

## व्यञ्जनालक्षणे आलङ्कारिकाः

रसरूपस्यात्मनोऽभिव्यक्त्यर्थमङ्गीकृताऽऽलङ्कारिकैः स्वप्राणभूतेव व्यञ्जनाख्या शब्दवृत्तिः, एतस्या लक्षणमनेकत्र स्थलेषु उल्लिखितं तदनुगामिभिः । यथा च काव्यप्रकाशटीकाकारेण श्रीवामनाचार्येण "व्यञ्जना च शक्तिलक्षणाद्यजन्य-प्रतीतिजनकः पदादिगतो व्यापारः"[4] इत्युक्तम् । श्रीहरिदासभट्टाचार्येणाऽपि

---

१. प्रौ० म० सि० कौ०—कारक-प्र०—लक्षणेत्थं० सूत्रम् ।

२. वै० सि० कौ०-कारक-प्र० ।

३. ल० श० शे०—कारक प्रक०—अपिः पदार्थ० सूत्रे ।

४. का० प्र०—२।१२—पृ० ६६ ।

"वाच्यादिभिन्नार्थप्रतिपादकत्वे सति वृत्तित्वमिति लक्षणमुक्तम् ।[1] वस्तुतः शब्दमात्रेण भिन्नमर्थतः पूर्वचर्चितमेवैतल्लक्षणम् । मूलग्रन्थत एवेदं लक्षणं लभ्यते । तथा च—

विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः ।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥

स्वकार्यसम्पादनेन शब्दस्य, ज्ञानस्य, क्रियायाश्च व्यापारः सकृदेव क्षीण-सामर्थ्यो भवति, इति कार्यान्तरार्थं पुनरन्यो व्यापारोऽपेक्ष्यते इति नियमेन अभिधादीनां निवृत्तौ सत्यां व्यञ्जनाख्यो व्यापार आश्रीयते । व्यञ्जन-ध्वनन-गमन-प्रत्यायनादिशब्दैरपि अयं व्यापारः संकीर्तितो भवति ।[2]

## प्रस्थानरत्नाकरकृतां मतेऽस्या लक्षणम्

"लक्षणास्थले फलप्रत्यायिका, नियतशक्त्यनेकार्थस्थले विवक्षितातिरिक्त-वाच्यप्रत्यायिका वृत्तिर्व्यञ्जना" इति स्थलभेदेन लक्षणद्वयमुक्तं प्रस्थानरत्नाकरे श्रीगोस्वामिश्रीपुरुषोत्तम-महाराजेन ।[3]

## रत्नप्रभाकृत्सम्मतमेतल्लक्षणम्

वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वं व्यञ्जनात्वम् इति ।[4]

## अत्र निष्कर्षः

अलङ्कारशास्त्रोक्तं लक्षणम् भेदघटिततया प्रतियोगिज्ञानापेक्षमिति गुरु-शरीरम्, मदुक्तलक्षणापेक्षया । किञ्च, व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति

---

१. सा० द०—कुसु० टी० २ परि० पृ० ५ ।
२. सा० द०—२।१२-१३ पृ० ५१-५२
३. प्र० र० प्र० परि० पृ० ६५ ।
४. ल० श० शे० कारकप्र०, अनभिहिते इति सूत्रम् ।

लक्षणेन लक्ष्ये स्वेतरभेदसाधने अंशतः सिद्धसाधनदोषोऽपि । किञ्च, शब्दतदर्थयोः सम्बन्धविशेषो व्यञ्जना नाम । स चावश्यं केनचिन्नाम्ना व्यपदेश्य इत्यादि मदूहितलक्षणेनैव पूरयितुं शक्यते ।

श्रीगोस्वामिकृतं लक्षणं त्वननुगमदोषग्रस्तमेवेति कथं समादरार्हं स्यात् ?, तृतीयमपि रत्नप्रभालक्षणं यत्तरदघटितत्वेनाननुगतमेव ।

—क्रमशः

— — —